त्वप्रमातृणां विभोः परशक्तिपातानुग्रहवशोत्प-न्नैतावदनुत्तरज्ञानभाजनभावानाम् इत्थं निज-स्वरूपहृदयङ्गमीभावेन निजामोदभरक्रीडा-भासितभेदस्य निखिलबन्धाभिमततत्त्वव्रात-स्य स्वात्मचमत्कारपूर्णाहन्तातादात्म्यभैरव-स्वरूपाभेदसमावेशात्मिका जीवत एव मुक्तिः। प्राणदेहादिभूमावेव हि अन्तर्बहिष्करणविष-यायां प्रेरणाख्यायाम् उद्योगबलजीवनादिरूपा-यां रूढस्य बन्धाभिमतेभ्यो मुक्तिः,–इति गी-यते। त्रुटितेऽपि हि मायीये संस्कारमात्रे केयं मुक्तिवाचोयुक्तिः, किमपेक्षया वा?,इति तदु-क्तं श्रीस्पन्दे

'इति वा यस्य संवित्तिः क्रीडात्वेनाखिलं जगत्।
स पश्यन् सततं युक्तो जीवन्मुक्तो न संशयः॥'

इति। स्फुटीभविष्यति च एतत् अविदूर एव।

'जहि जहि धावइ जंकुण तहि तहि बिअविअकाउ।
अच्छन्त उपरिउणबिअपाय इहलइफलसिवणाओ॥'

पं० १६ घ० पु० बिअलि इति पाठः।
पं १७ घ० पु० उस्म।बिअपावा इति पाठः। तथा फलमिवणाओ इति पाठः।

तदनेन स्वसंवेदनेन प्रयोजनमेव अत्र सकलपुमर्थपर्यवसानम्—इति प्रयोजनप्रयोजनानां[४५] नवकाशः। उक्तान्येव संबन्धाभिधेयप्रयोजनानि।

अथ ग्रन्थार्थो व्याख्यायते। 'अनुत्तरम्' इति, न विद्यते उत्तरमधिकं यतः, यथा हि तत्त्वान्तराणि षट्त्रिंशत् अनाश्रितशिवपर्यन्तानि परभैरवबोधानुप्रवेशासादिततथाभावसिद्धीनि संविदमाधिकयन्ति, नैवं परा परिपूर्णा परभैरवसंवित्तिः[४६], तस्याः सदा स्वयमनर्गलानपेक्षप्रथाचमत्कारसारत्वात्। तथा न विद्यते उत्तरं प्रश्नप्रतिवचोरूपं यत्र, यत एवं हि महासंवित्सिन्धोः उल्लसदनन्तप्रतिभापर्यन्त-

---

४५ यदुक्तं स्तोत्रे

'फलं क्रियाणामथवा विधीनां
पर्यन्ततस्त्वन्मयतैव देव।
फलेप्सवो ये पुनरत्र तेषां
मूढा स्थितिः स्यादनवस्थयैव॥'

४६ स्वव्यतिरिक्तमन्यत् किमपि न अधिकयति।

---

पं० २ ङ० पु० पर्यवसानस्थानमिति पाठः।

पं० ६ ख० पु० शिवान्तानि इति पाठः।

धाम्न उल्लास्यप्रश्नप्रतिभानादिपात्रं भवति शिष्यः, तदेव वस्तुतः तत्त्वं सततोदितम् ,—इति किमिव आचार्यीयमुत्तरमन्यत् स्यात् । उत्तराणाम् उत्तरो भेदवादाभिमतोऽपवर्गः, स हि वस्तुतो नियतिप्राणतां नातिक्रामति । तथाहि प्रथमं शरीरात् प्राणभूमावनुप्रविश्य, ततोऽपि बुद्धिभुवमधिशय्य, ततोऽपि स्पन्दनाख्यां जीवनरूपतामध्यास्य, ततोऽपि सर्ववेद्यप्रत्ययात्मशून्यपदमधिष्ठाय, ततोऽपि सकलमलतानवतारतम्यातिशयधाराप्राप्तौ शिवत्वव्यक्त्या अणुरपवृज्यते आरोपव्यर्थत्वात्—इति । ईदृश एव नाभिहृत्कण्ठतालुब्राह्मभैरवबि-

---

पं० १ क० पु० उल्लाप्य इति, ग० पु० उल्लासस्य इति पाठः।
पं० २ क० पु० तदैव इति पाठः।
पं० ३ ख० पु० किं वाचार्यीयम् इति पाठः ।
पं० ५ ङ० पु० नियतप्राणतामिति पाठः ।
पं० ८ ङ० पु० जीवरूपतामिति पाठः ।
पं० ११ घ० पु० व्यर्थात् अणोरपवृज्यते इति पाठः ।

त्वाद्यधिष्ठानक्रमप्राप्त ऊर्ध्वतरणक्रम[47] उत्तरः, तथा उत्तरन्ति अत इति उत्तरो बन्धः, उत्तरणमुत्तरो मोक्षः, तत् एवं-विधा उत्तरा यत्र न सन्ति; उत्तरं च शब्दनं तत् सर्वथा 'ईदृशं तादृशम्'[48] इति व्यवच्छेदं कुर्यात्, तत् यत्र न भवति अव्यवच्छिन्नम् इदम् अनुत्तरम्। इदम् इत्यपि हि व्यवच्छिन्नोत्तरव्यवच्छेदप्राणमेव,—इति व्यवच्छेदकत्वात् विक-

४७ तथा सृष्टिक्रमेण तन्त्रालोके

संविन्मात्रं हि यच्छुद्धं प्रकाशपरमार्थकम्।
तन्मेयमात्मनः प्रोज्भ्य विविक्तं भासते नभः॥
स एव खात्मा मेयेऽस्मिन् भेदिते स्वीक्रियोन्मुखः।
पतन् समुच्छलत्त्वेन प्राणस्पन्दादिसंज्ञितः॥
तेनाहुः किल संवित् प्राक् प्राणे परिणता तथा।
अन्तःकरणतत्त्वस्य वायुराधारतां गतः॥
इयं सा प्राणनाशक्तिरान्तरोद्योगदोहदा।
स्पन्दः स्फुरत्ता विश्रान्तिर्जीवो हृत् प्रतिभा मता॥
सा प्राणवृत्तिः प्राणाद्यै रूपैः पञ्चभिरात्मसात्।
देहं यत् कुरुते संवित्पूर्णस्तेनैष जायते॥

इति। इत्थं यथाप्रसृति लयभावनया ऊर्ध्वक्रमणम्॥

४८ ईदृशमिति प्रत्यक्षतया व्यवच्छेदः तादृशमिति परोक्षतया व्यवच्छेदः इति।

पं० ८ घ० पु० च्छेदे प्राणमिति पाठः।

ल्पात्मैव, अत एव यावदनुत्तरे रूपे प्रविविक्षुः मायीयः प्रमाता तावत् कल्पित एव विशेषात्मनि, तत्र तु अविकल्पितं यत् अविनाभावि तद्विना कल्पितरूपास्फुरणात्, तदेव वस्तुतोऽनुत्तरम् । तत्र हि भावनादेः अनुपपत्तिरेव वस्तुतः,—इति भावनाकरणोज्झितत्वमुक्तं[४६], नतु अनुपयुक्तित एव, तत् ईदृशमनुत्तरं व्यवहारवृत्तिष्वपि एवमेव—इति । तदुक्तं मयैव स्तोत्रे

'वितत इव नभस्यविच्छिदैव
प्रतनु पतन्न विभाव्यते जलौघः ।

---

४६ यथा श्रीसोमानन्दपादैः

'भावनाकरणाभ्यां किं शिवस्य सततोदितेः ।
सकृज्ज्ञाते सुवर्णे किं भावनाकरणादिना ॥
सर्वदा मातृपित्रादितुल्यदार्ढ्येन सत्यता ।
एकवारं प्रमाणेन शास्त्राद्वा गुरुवाक्यतः ॥
ज्ञाते शिवत्वे सर्वस्थे प्रतिपत्त्या दृढात्मना ।
करणेन नास्ति कृत्यं क्वापि भावनयापि वा ॥'

इति ॥

---

पं॰ १ घ॰ पु॰ अनुत्तररूपे इति पाठः ।

उपवनतरुवेश्मनीध्रभागा-
द्युपधिवशेन तु लक्ष्यते स्फुटं सः ॥
................................
....................................
....तद्वत् परभैरवोऽतिसौक्ष्म्याद्
अनुभवगोचरमेति नैव जातु ॥
अथ देशाकृतिकालसन्निवेश-
स्थितिसंस्पन्दितकारकत्वयोगाः ।
जनयन्त्यनुभाविनीं चितिं ते
झटिति न्यक्कृतभैरवीयबोधाः ॥'

इत्यादि। तथा च वक्ष्यते 'उत्तरस्याप्यनुत्तरम्' इति। व्याख्यायते च एतत्। एवमेव नरात्मनः शाक्तमुत्तरं ततोऽपि शाम्भवं, तथा तेष्वपि भूततत्त्वात्ममन्त्रेश्वरशक्त्यादिभेदेन स्वात्मन्येव उत्तरोत्तरत्वं, भूतादिष्वपि पृथिव्यादिरूपतया, जाग्रत उत्तरं स्वप्नः, ततः सुप्तं ततस्तुर्यं ततोऽपि तदतीतं, जाग्रदादिष्वपि स्वात्मन्येव चतुरादिभेदतया उत्तरोत्तरत्वम्। तदेतत् श्री-

पं० १४ घ० पु० व्याख्यास्यते चेति पाठः।

पं० १८ क० ग० पु० भेदतयोत्तरत्वम् इति घ० पु० तदेव पूर्वैति पाठः।

पूर्वपञ्चिकायां मयैव विस्तरतो निर्णीतम् इह अनुपयोगात् ग्रन्थगौरवात् च न वितत्य उक्तम् । तत् ईदृशमौत्तराधर्यद्वैतसंमोहाधायि उत्तरत्वं, तथा विप्रराजन्यवैश्यशूद्रान्त्यजातिविभागमयम् ऊनाधिकत्वं यत्र न स्यात्, भावप्राधान्यमुत्तरशब्दस्य। उत्तराः पश्यन्त्याद्याः शक्तयः, अघोराद्याः, पराद्याः[५०] ता यत्र न स्युः, 'नुद प्रेरणे' इत्यस्य नोदनं नुत्, तया तरणं दीक्षाक्रमेण तरः शिष्यचैतन्ये गुरुः चैतन्यं

५० परसूक्ष्मस्थूलरूपतया पश्यन्ती मध्यमा वैखरीति व्यवस्थिताः एते न च क्रमेण इच्छाज्ञानक्रियारूपाः शक्तयः। अधिष्ठातृलक्षणा अघोर-घोराघोर-घोराश्च शक्तयः। परादिस्वरूपं यथा अन्यत्र—यया इदं शिवादिधरण्यन्तम् अविकल्पसंविन्मात्रतया बिभर्ति च पश्यति च भासयति च परमेश्वरः सा अस्य पराशक्तिः। यया दर्पणहस्त्यादिवत् भेदाभेदाभ्यां सा परापरा, यया परस्परविविक्ततया भेदेन सा अपरा। एतत् त्रितयं यया आत्मनि क्रोडीकारेण अनुसंधानात्मना ग्रसते सापि परैव कालकर्षिणीशब्दान्तरनिर्दिष्टा इति ।

पं० ३ घ० पु० धर्यं द्वैतेति पाठः। ख० पु० संमोहशायि इति पाठः।
पं० ४ ख० पु० तत्तथेति, घ० पु० विट्शूद्रेति पाठः।
पं० ६ घ० पु० पश्यन्त्यादय इति पाठः।

प्रेर्यते[५२] तेन हंसप्राणादिशून्यविषुवत्प्रभृतिस्थानभेदपरिपाट्या सकले निष्कलेऽपि वा पूर्णाहुतियोजनिका[५३]दिस्थित्या मोक्षदां दीक्षां विधत्ते; तत् अत्र चैतन्यस्य स्वप्रकाशस्य व्यापिनो देशकालाकारविशेषाविशेषितस्य कथङ्कारम्[५४] इमा विडम्बनाः ?। तत् एवंविधो 'नुदा' प्रेरणेन 'तरः' तरणं यत्र न भवति तत् अनुत्तरम्। यत् वक्ष्यते

'एवं यो वेत्ति तत्त्वेन तस्य निर्वाणगामिनी।
दीक्षा भवति ................................ ॥

इति। अनिति श्वसिति इति क्विपि अन्—अणुः आत्मा देहपुर्यष्टकादिः, तथा अननं जीवनम्

५२ 'आत्मनो ग्रहणं कुर्याद्दीक्षाकाले गुरुर्धिया।'
इति नीत्या अप्रबुद्धे शिष्यचैतन्ये स्वकीयं प्रबुद्धं चैतन्यं प्रेर्यते इति।
५३ योजनिकेति, यथोक्तं तन्त्रसारे 'तत्त्वशुद्धि—शिवयोजनारूपा दीक्षा' इति।
५४ अत्र क्रमेण हेतुपूर्वः संबन्धः कार्यो, यथा—यत आकाराविशेषितः कथं सकले निष्कले वा इति, यतो व्यापी कथं योजनं, यतो देशकालाविशेषितः कथं मोक्षदां दीक्षां विधत्त इति, यतश्च स्वप्रकाशः स्वतन्त्रश्च कथं विधानं तत्र संभवेत्। तत्र भोगमोक्षप्राप्त्यर्थं सकलनिष्कलयोगः केवलं मोक्षप्राप्त्यर्थं निष्कल एवेति दीक्षाक्रमः।

पं० १० क० पु० क्विप् अनुत्तरात्मेति पाठः।

अन् देहाद्यन्तर्गतैव भिन्नभिन्नशक्त्याद्यहन्ताशून्यप्राया जीवनाख्या वृत्तिः, यः शून्यप्रमाता[५५] इति अभिहितः, तस्यैव उत्तरत्वं सर्वतः परमार्थतया आधिक्यं यत्र–भैरवैकमयत्वात्; जडाजडभरिते जगति जडैः जीवदेकमग्नैः स्थीयते,[५६]

५५ यन्नाम हि इदं मातृमानमेयत्रयात्मविश्वाभेदेन अवभासमानं प्रकाशतत्त्वम् इच्छादिशक्त्यविशेषितं तदेव स्वस्वातन्त्र्यात् स्वात्मनि स्वाविभागेनावस्थितं विश्वात्ममेयमवबिभासयिषया आत्मनः पृथक्कृत्य सर्वस्मात् उत्तीर्णोऽहम् इत्यामर्शनेन सकलभावशून्यत्वात् निरावरणरूपतया शून्यप्रमाता इत्यागमेषु आम्नातः। शून्यत्वं चात्र सकलभावक्षयात् न तु संविदोऽपि, तथात्वे च सर्वमनेलमूकं स्यात्। उक्तं च अन्यत्र

'सर्वालम्बनधर्मैश्च सर्वतत्त्वैरशेषतः।
सर्वक्लेशाशयैः शून्यं न शून्यं परमार्थतः॥'

इति।

५६ अत्रायं भावः घटो मम स्फुरतीति कोऽर्थः मदीयं स्फुरणं स्पन्दनमाविष्टो मद्रूपतामापन्न एव चिन्मयत्वात्। उक्तं च श्रीमदुत्पलदेवप्रभुपादैः

'एवमात्मन्यसत्कल्पाः प्रकाशस्यैव सन्त्यमी।
जडाः..................................॥'

इति। येऽपि अन्ये जडेभ्यो जीवन्त इति प्रसिद्धाः तेषामपि शरीरप्राणपुर्यष्टकशून्याकारास्तावत् जडा एवेति तेषामपि किमुच्यते, एवं च सति घटशरीरप्राणपुर्यष्टक-सुख-तदभावरूपं सत् यन्मग्नं भाति तदेव जीवरूपभूतं सत्यम्। तथा ईश्वरप्रत्यभिज्ञायाम्

'तथाहि जडभूतानां प्रतिष्ठा जीवदाश्रया।'

इति।

पं० १ क० ख० पु० भिन्नशक्त्यादीति पाठः।

जीवतां च जीवनं नाम प्रागुक्तं ज्ञानक्रियारूपमेकं पारमेश्वर्यं सर्वेषां, परत्रापि हि स्ववत् देहादिरेव[५७] पृथक्तया भाति। यत् पुनः प्राणनं तत् अभेदेनैव स्वप्रकाशम्, एतदेव च परमार्थः। यदुक्तं श्रीमदुत्पलदेवपादैः

'ज्ञानं क्रिया च भूतानां जीवतां जीवनं मतम्।'

इति। तथा च जीवनं ज्ञानक्रिये एव इति। 'अ' इति च या इयम् अमायीयाश्रौतनैसर्गिकमहाप्रकाशविश्रान्तनिस्तरङ्गचिदुदधिस्वात्मचमत्काररूपा शाक्तोल्लासमयविश्वामर्शनरूपपरिपूर्णाहंभावप्रथमपर्यवसानोभयभूमि[५८]गा कला तस्या एव वक्ष्यमाणनयेन या इयं 'नुत्' विसर्गान्तता तस्या एव 'तरः' प्लवनं — सर्वोपरि-

५७ अजीवन्त इति जीवन्त इति च आपात एवाभाति न तु सविद्रूपे इत्यर्थः।

५८ शाक्तोल्लासमयी प्रथमभूमिः—अहमिति, विश्वामर्शमयी पूर्णाहंभावभूमिः पर्यवसानभूमिरित्यर्थः।

पं० १ ख० पु० जीवानां चेति पाठः।

पं० ८ ख० पु० इयं मायीयेति पाठः।

पं० १३ क० पु० विसर्गान्ता इति पाठः।

वृत्तित्वं यत्र । अविद्यमाना देशकालगमनागमनादिद्वैतसापेक्षा 'नुत्' प्रेरणा क्रमात्मकक्रियामयी यत्र तत् 'अनुत्' आकाशादि लोकप्रसिद्धया, ततोऽपि सातिशयमनुत्तरम्, तस्यापि[५६] हि आकाशादेः संयोगिघटादिचित्रोपाधिवशात् समवायिशब्दादियोगात् च स्यादपि ईदृशी सक्रमा क्रिया। संवित्तत्त्वे तु सर्वतोऽनवच्छिन्नपूर्णस्वातन्त्र्यैश्वर्यसारे विच्छिन्नचमत्कारमयविश्रान्त्या स्वीकृतशङ्क्यमानोपाधिभावसकलेदन्तास्पदभावपूगपरिपूरिताहमात्मनि निराभासे सदाभासमाने स्वीकाराभासीकृतानाभासे इदन्ताभासतदनाभाससारदेशकालापेक्षक्रमाभावात् अक्रमैव स्वात्मविमर्शसंरम्भमयी मत्स्योदरीमतादिप्रसिद्धा विमर्शाभिधा

५६ अनुत्तरस्यातिशयमेवाह तस्यापीत्यादिना ।

पं० ६ ख० पु० शब्दोपाधियोगादिति पाठः ।

पं० ६ ख० पु० विश्रान्तिस्वीकृतेति पाठः ।

पं० १२क० पु० सारे देशेति पाठः ।

पं० १३ख० पु० अक्रमिकैवेति पाठः ।

क्रिया इति तदेव अनुत्तरम्, अतिशयमात्रे तमपो विधिः, द्विवचनविभज्योपपदे अत्र तरप्। तत्र अयं शुक्लोऽयं शुक्लः, अयमनयोः अतिशयेन शुक्लः इति वाक्येऽयमर्थः – अनयोः शुक्लयोः मध्यात् अतिशयेन अयं शुक्लः शुक्लतरः, एषां तु शुक्लानामयमतिशयेन शुक्लः इति कोऽयमधिकोऽर्थः, तथाहि – अयं प्रासादः शुक्लः, अयं पटः शुक्लः, अयं हंसश्च शुक्लः, एषां सातिशयः शुक्लतमः इति, तत्र प्रासादोऽपि शुक्लः पटोऽपि शुक्लः इति किमिव अधिकमुक्तं स्यात्, तमपि प्रत्यये एवंविधवाक्यकरणमयुक्तमेव, न च तरपः तमप् अधिकमतिशयमभिदध्यात्, एवं तावत् तु स्यात्– अविवक्षिते प्रतियोगिविशेषे तमप्प्रयोगः, प्रतियोगिविशेषापेक्षायां तु तरप्, प्रतियोग्यपेक्षैव

---

पं० ४ घ० पु० मध्यात् अयं सातिशयः शुक्ल इति पाठः।

पं० ११क० पु० तमपि प्रयोगे इति पाठः।

पं० १४क० पु० पेक्षयैव द्विवचनविभक्ति इति पाठः।

द्विवचनविभज्योपपदार्थः, एक एव हि प्रतियोगी भवेत्, अनयोः अयं शुक्लोऽतिशयेन इति न तृतीयः प्रतीयते, निर्धारणार्थेन प्रथमस्यैव प्रतियोगित्वावगतेः। न च द्विप्रभृत्यपेक्षा भवति एकस्य युगपत् एकैकापेक्षा मता—इति तस्य क्रमेण नाधिकोऽर्थः कश्चित्। 'तारतम्यम्' इति तु प्रयोगः क्रमातिशयेऽव्युत्पन्न एव रूढः, न तु तरप्-तमप्प्रत्ययार्थानुगमात् 'तार्यं ताम्यम्' इत्याद्यपि हि स्यात्। तदलम् अकाण्डे श्रुतलवकौशलप्रथनेन। इह तु उत्तरक्रमिकप्रातियोग्यपेक्षायां 'अनुत्तमम्' इत्यपि प्रयोगे अयमेव अर्थः। तथाहि आगमान्तरे

'अद्यापि यन्न विदितं सिद्धानां बोधशालिनाम्।
न चाप्यविदितं कस्य किमप्येकमनुत्तमम्[६०]॥'

६० अद्यापीति सम्यक्प्रकाशसमापत्तौ सिद्धानामिति परशक्तिपातवशोन्मिषितगुरुशास्त्रसंप्रदायानाम्. अत एव बोधशालिनां स्वातन्त्र्याख्यबोधमूलविमर्शशालिनां यन्न विदितं स्वयमेव तथाधाराधेयोभयस्वरूपत्वात् वेद्यतया न ज्ञातम्, तथा कस्यापि सामान्यजनस्य, न च अविदितं तेन विना कस्यापि सिद्ध्यनुपपत्तेः ज्ञातमेव ज्ञानार्हम् अत एव आपाते विरोधिरूपत्वात्, किमपीति—सर्वोत्कृष्टमित्यर्थः।

प० ६ क० पु० अधिकार्थ इति पाठः।
पं० १०ख० पु० हेतूत्तर इति पाठः।
पं० १३घ० पु० योगशालिनामिति पाठः :
पं० १४घ० पु० किमप्येतदिति पाठः।

इति। एवं स्वातन्त्र्यसाराकलितक्रियाशक्तिश-रीरमनुत्तरम्। तदुक्तमुत्पलदेवपादैः

'सक्रमत्वं च लौकिक्या[६१]ः क्रियायाः कालशक्तितः।
घटते न तु शाश्वत्याः प्राभव्याः स्यात्प्रभोरिव ॥'

इति। तत् व्याख्यातमिदमनुत्तरं षोडशधा। यदुक्तं सारशास्त्रे

'अनुत्तरं तद्हृदयं हृदये ग्रन्थिरूपता।
ग्रन्थिं षोडशधा ज्ञात्वा कुर्यात्कर्म यथासुखम् ॥'

---

६१ लौकिक्या इति हस्तोत्क्षेपणापक्षेपणादिरूपायाः। कालशक्तित इति आभासविच्छेदनप्रदर्शनसामर्थ्यरूपात् पारमेश्वरात् शक्तिविशेषात्। शाश्वत्या इति अत्यक्तप्राच्यस्वभावायाः। प्राभव्या इति प्रभ्वव्यतिरेकिण्याः। अत्रायं तात्पर्यार्थः – लौकिकज्ञानव्यवहारमूलज्ञातृज्ञेयप्रकाशने सामर्थ्यं ज्ञानशक्तिर्देवस्य, तत्रैव संयोजनादिस्वतन्त्रतात्मा विमर्शशक्तिरेव क्रिया, सा तु वेद्यच्छायाच्छुरणम् अच्छत्वादवच्छेदकम् अभ्युपयती क्रमवती भाति वस्तुतोऽक्रमत्वेपि इति कालानवच्छेदात् तावत् अक्रमत्वं स्थितमेव इति किमत्रोच्यते उन्मिषितेऽपि वेद्यग्रामे मायाप्रमातृपदमध्यासीनोऽपि भगवान् यावदेव बाह्याभ्यन्तररूपवेद्यकुलं स्वात्मनि

'प्रकाशस्यात्मविश्रान्तिः················।'

इति,

'इदमित्यस्य विच्छिन्न ················।'

इत्यादिनयेन विश्रमयति ग्रसते तावत् तन्निष्ठोऽवभासनक्रमोऽपि ग्रस्त एवेति, अहमिति या संयोजनादिचित्रितसमस्तभावप्रकाशोपसंहारपर्यन्तदशाविशेषविमर्शलक्षणा क्रिया सा निष्क्रमैवेति ॥

---

पं० १ क० पु० साराकालाकलितेति पाठः।

इति। तथा

'हृदये यः स्थितो ग्रन्थिः……………।'

इत्यादि। तत् ईदृक् अनुत्तरं केन प्रकारेण किमुत्तररूपपरित्यागेन उत स्वित् अन्यथा?[६२]–इति। कश्च अयं प्रकारः–यदनुत्तरं सर्वमिदं[६३] हि ज्ञानज्ञेयजातं सर्वत एव अन्योन्यं भेदमयं विरोधमुपलभते, ततश्च इदम् औत्तराधर्यं भवेदेव–इति कस्मिंश्च प्रकारे मोक्षे एव किं वा बन्धाभिमतेऽपि?[६४]–इति थमुप्रत्ययस्य विभक्तिविशेषार्थानियमेन प्रकारमात्रे विधानात् प्रकारमात्रविषय एव अयं प्रश्नः। 'देव' इति व्याख्यातम्। कुलं स्थूलसूक्ष्मपरप्राणेन्द्रियभूतादि–समूहात्मतया, कार्यकारणभावात् च। यथोक्तम्

६२ सामान्यविच्छेदको विशेष. प्रकारः। उत्तररूपेति विश्वोत्तीर्णस्वरूपेण, अन्यथेति विश्वमयस्वरूपेण स्वीकारात्।

६३ ज्ञानज्ञेयभेदेन द्विधैव जगत्।

६४ किं मुक्तावेव ईदृशमनुत्तरस्वरूपमुपलभ्यते किं वा बन्धाभिमते संसारेऽपि इति अपिशब्दस्याय भावः, यत् 'संसारोऽस्ति न तत्त्वतः' इति प्रोक्तनीत्या वस्तुतोऽसम्भवी संसारो मोहनीशक्तिवशाद्बन्धतयाभिमतोऽपि इति।

पं० १० क० पु० प्रकारमात्रे नियमादिति पाठः।

संहत्यकारित्वात् ( . )

इति । तथा कुलं बोधस्यैव आश्यानरूपतया[६५] यथावस्थानात् बोधस्वातन्त्र्यादेव च अस्य बन्धाभिमानात् । उक्तं हि 'कुल संस्त्याने बन्धुषु च' ( धा. भ्वा. प. ) इति । नहि प्रकाशैकात्मकबोधैकरूपत्वात्[६६] ऋते

६५ शिवात्मा खलु प्रकाशः शक्तिसदाशिवादिपरिपाट्यनुसारेण भूतपञ्चकपर्यन्तः स्त्यानीभवति वेदितृस्वभावन्यग्भावात् वेद्यतोत्कर्षात्मकं काठिन्यं स्त्यानीभवनं, तथा च सति तदेव स्वात्मनि बन्धतयाभिमन्यते पशुजन इति। आश्यानतायामपि न स्वस्वरूपं कदाचित् परित्यजति हिममिव जलत्वमित्याह नहीत्यादिना । उक्तं च महार्थमञ्जर्याम्

'स्त्यानस्य क्रियावशादिक्षुरसस्येव शिवप्रकाशस्य ।
गुडपिण्डा इव पञ्चापि भूतानि मधुरतां न मुञ्चन्ति ॥'

इति ।

६६ बोधैकरूपत्वादिति विशुद्धचिन्मयप्रमात्रैकात्म्यमनुज्झतामेव भावानां प्रकाश उपपद्यते, तेन ज्ञानशक्तिमूलत्वात् स्मरणविकल्पादीनामपि इत्थमेव मन्तव्यम् । उक्तं चेश्वरप्रत्यभिज्ञायाम्

'वर्तमानावभासानां भावानामवभासनम् ।
अन्तःस्थितवतामेव घटते बहिरात्मना ॥'

इति ।

पं० २ ख०पु० बोधरूपत्वादिति पाठः ।

किमपि एषामप्रकाशमानं[६७] वपुरुपपद्यते, तत्र कुले भवा कौलिकी सिद्धिः—तथात्वदार्ढ्यं परिवृत्त्य आनन्दरूपं, हृदय[६८]स्वभावपरसंविदात्मकशिवविमर्शतादात्म्यं, तां सिद्धिं ददाति अनुत्तरस्वरूपतादात्म्ये हि कुलं तथा भवति। यथोक्तम्

'व्यतिरेकेतराभ्यां[६९] हि निश्चयोऽन्यनिजात्मनोः।
व्यवस्थितिः प्रतिष्ठाथ सिद्धिर्निर्वृत्तिरुच्यते ॥'

इति। सद्य इति शब्दः समाने अहनि इत्यर्थवृत्तिः उक्तनयेन[७०] अह्नोऽनवस्थितत्वात् समाने

६७ अप्रकाशमानमिति नीलादेरर्थजातस्य नीलादिरूपतैव यदि प्रकाशमानता न पुनरर्थशरीरोत्तीर्णा प्रकाशमानता तर्हि यथा ज्ञानानुत्पादे सर्वान् प्रति तन्नीलमेव भण्यते न कंचिद्वा प्रति वस्तुतो वा स्वात्मन्येव तन्नीलं परस्य परनिष्ठतानुपपत्तेः स्वात्मन्यपि वा न नीलं नापि अनीलं प्रकाशानुग्रहेण विना व्यवस्थानायोगात्, तथा अप्रकाशमानतापि इति अप्रकाशमानताप्रसङ्गोपरतिः।

६८ हृदयस्वभावेति स्पन्दस्वभावः।

६९ स्वसत्तायामन्याभावः, अन्याभावे स्वस्य भाव इति व्यतिरेकान्वयौ।

७० काल्पनिकं च अद्यतनत्वम् अकाल्पनिके संविद्वपुषि कथं स्यात् इत्युक्तो नयः।

पं० ३ ख० घ० पु० दार्ढ्यं परनित्यानन्देति प्रथमपाठः, शोधितस्तु परवृत्त्यानन्देति पाठः।

क्षणे इत्यत्र अर्थे वर्तते। समानत्वं च क्षणस्य न सादृश्यम्, अपितु तत्त्वपर्यवसाय्येव, एवमेव सद्यःशब्दात् प्रतीतिः। अतस्तस्मिन्नेव क्षणे इति वर्तमानक्षणस्य सावधारणत्वेन भूतभविष्यत्क्षणान्तरनिरासे तदुभयापेक्षकलनाप्राणां वर्तमानस्यापि कालतां निरस्येत, यतो यावदिदं परमेश्वरस्य भैरवभानोः रश्मिचक्रात्मकं निजभासास्फारमयं कुलमुक्तम्, तत् च एतत् अन्तर्मुखपरभैरवसंवित्तादात्म्यलक्षणं निरोधमेति, तदा तदेव परमानन्दामृतास्वादमयमदेशकालकलितम् अनुत्तरं ध्रुवं विसर्गरूपं सततोदितं। तदुक्तं श्रीवाद्यतन्त्रे

'संरुध्य[७१] रश्मिचक्रं स्वं पीत्वामृतमनुत्तमम्।
कालोभयापरिच्छिन्नं वर्तमाने सुखी भवेत् ॥'

---

७१ एतदेव अत्र संरोधनं यत् नीलादेरर्थजातस्य आश्यानस्य देहप्राणादिप्रमातृताभिमानेन वेद्यतोत्कर्षात् तन्निमज्जनात् तस्यापि प्रकाशैकमग्नत्वमुक्तनयेन।

---

पं० १४ ख० घ० पु० कालोभयपरिच्छन्नं वर्तमानेति पाठः।

इति। विस्तारितश्च विस्तरतोऽन्यत्र मयैव का-
लोभयापरिच्छेदः। तथा कुलात् प्राणदेहादेः
आगता सिद्धिः भेदप्राणानां नीलसुखादीना
निश्चयरूपा तां ददाति इति–[७२]शरीरादयो हि
झगिति अनुत्तरध्रुवविसर्गवीर्यावेशेन अकाल-
कलितेन प्राणादिमध्यमसोपानारोहेणैव भा-
वानां तथात्वनिश्चयरूपां सिद्धिं विदधते। य-
थोक्तम्

'अपि त्वात्मबलस्पर्शात् पुरुषस्तत्समो [७३]भवेत्।' (स्प० ३० १-८)

इति। तथा

..........................करणानीव देहिनाम्। (स्प०३०२-१०)

इति। तथा कुले शिवशक्त्यात्मनि संनिहितेऽ-
पि सिद्धिरुक्तनयेन जीवन्मुक्ततामयी समभि-

७२ यदेतत् संक्षेपेणोक्तं तदेव विवृण्वन् आह शरीरादयो हीत्यादि। अयमत्र भावः–यदाहुरन्ये धर्माधर्मसम्बन्धादेव सर्वो व्यवहारः, तेनैव इच्छागुणेन करणानि अचेतनान्यपि स्वस्वकार्येषु प्रवर्तन्ते न पुनस्तदधिष्ठानादिति शङ्का। झगितीति न तु इच्छादिव्यवधानेनेतिभावः।

७३ परप्रमातुरनन्यापेक्षस्वातन्त्र्यलक्षणात् ईश्वरसमो भवतीति।

पं० २ ख० घ०पु० भयपरीति पाठः

पं० १३ ख० ग०पु० मयीमभिलषितेति पाठः।

लषिताणिमादि[७४]प्रसवपदं, तां सद्यः अनाकलितमेव भावनाकरणादिरहितत्वेनैव ददाति। यदुक्तं श्रीसोमानन्दपादैः।

'भावनाकरणाभ्यां किं शिवस्य सत[७५]तोदितेः।'

इति। तथा

'एक[७६]वारं प्रमाणेन शास्त्राद्वा गुरुवाक्यतः।

---

७४ 'अणिमा महिमा चैव लघिमा गरिमा तथा।
प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः॥'

इति हि सिद्धयोऽत्राभेदसारा एव मन्तव्या इति। तथाहि चित्स्वरूप एव सर्वान्तर्भावक्षमत्वादणिमा, व्यापकत्वान्महिमा, भेदमयगौरवाभावात् लघिमा, विश्रान्तिस्थानत्वात् प्राप्तिः, विश्ववैचित्र्यग्रहणात् प्राकाम्यम्, अखण्डितत्वादीशित्वं, सर्वसहत्वाद्वशित्वं यत्रकामावसायित्वं च इति यत्र सिद्धयः सत्यतः परिपूर्णतया विद्यन्ते इति॥

७५ भावनाकरणाभावे सततोदितत्वमेव हेतुः, तत्तद्रूपाभासेपि तदेव हेतुः।

७६ एकवारमिति, यथा तन्त्रालोके

'गुरोर्वाक्याद्युक्तिप्रचयरचनोन्मार्जनवशात्
समाश्वासाच्छास्त्रं प्रति समुदिताद्वापि कथितात्।
विलीने शङ्काभ्रे हृदयगगनोद्भासिमहसः
प्रभोः सूर्यस्येव स्पृशत चरणान् ध्वान्तजयिनः॥'

इति। प्रमाणेनेति स्वयमूहितेन।

---

पं० १ प्रसवपदाम् इति पाठः।

पं० २ क० पु० रहितत्वेनैव भवतीति पाठः।

ज्ञाते शिवत्वे सर्वस्थे प्रतिपत्त्या दृढात्मना ॥
करणेन नास्ति कृत्यं क्वापि भावनयापि वा ।'

इति। कुले[७७] जाता सिद्धिः शाक्त-हादिरूपप्रसरणात् आरभ्य बहिर्भावपटलविकासपर्यन्तं भेदावभासना तां ददाति, तदेव हि अनुत्तरं महाप्रकाशात्म अन्तःकृतबोधमयविश्वभावप्रसरम् अनुत्तरत्वादेव निरतिशयस्वातन्त्र्यैश्वर्यचमत्कारभरात् भेदं विकासयति। नहि अप्रकाशरूपं भावविकासप्रकाशे कारणं भवेत्, प्रकाशात्मकं चेत् नूनं तत् परमेश्वरभैरवभट्टारकरूपमेव—इति किम्[७८] अपरेण वाग्जालेन। तथा येन अनुत्तरेण विशेषेण ज्ञाता मात्रा मानेन प्रमात्मना त्राणं पालनं पतित्वं यासां प्रमातृ-प्रमाणप्रमेयप्रमितिरूपाणां ता मात्रा वि-

७७ कुले शिवशक्तिसंघट्टात्मनि या विसिसृक्षा सैव अन्तःस्थितवती बहिरौन्मुख्यरूपा विसर्गलक्षणा शक्तिः।

७८ अत्रायं मायाप्रकृतिपरमाण्वादिः यदि प्रकाशरूपं तर्हि कृतं तदुक्त्या, यदि च न, तथापि अलब्धसत्ताकं स्वात्मनि कथं परत्र कारणतामियादिति।

पं० ४ क० पु० भासनतामिति पाठः।

ज्ञाता येन तत् विज्ञातमात्रं। तथा विशेषेण प्रतिपत्तिदार्ढ्यबन्धेन यत् ज्ञातं तत् विभातमेव, न पुनः भावनीयं सकृद्विभातात्मत्वात्। तथा ज्ञातमात्रं ज्ञातमेव ज्ञेयैकरूपत्वात्, न तु कदाचित् ज्ञातृरूपं घटादि, तथा ज्ञाता ज्ञेयरूपा भेदमयी इयं माया, तदुभयं विगतं यत्र तत् विज्ञातमात्रं, घटादयो यत्र ज्ञात्रेकरूपत्वेन स्वप्रकाशात्मानः, यत्र च माया न प्रभवति, तेन विज्ञातमात्रेण। खे ब्रह्मणि अभेदरूपे स्थित्वा चरति—विषयमवगमयति, तथा हानादानादिचेष्टां विधत्ते स्वरूपे च आस्ते इति खेचरी, अन्तर्बहिष्करणतदर्थसुखादिनीलादिरूपा, तथाहि वेद्यवेदकभावानुल्लासिपदे शून्ये संविन्मात्रदृगुल्लासे संवेद्यगतान्तरैक्यरूपदिश्यमानभेदोल्लासे स्फुटभेदोद्रेके च क्रमेण व्योमचरी-गोचरी-दिक्चरी-भूचरीभूता याः शक्तयः

पं० ६ क० पु० ज्ञातृज्ञेयरूपेति पाठः।

पं० ७ घ० पु० रूपतयेति पाठः।

पं० १४ ख० पु० दिश्यमाने इति पाठः।

ता वस्तुत उक्तनयेन स्वभावचरखेचरीरूपशक्त्यविभक्ता एव—इत्येकैव सा[७९] पारमेश्वरी शक्तिः। यदुक्तम्

'शक्तयोऽस्य जगत् कृत्स्नं शक्तिमांस्तु महेश्वरः।'

इति। ततः स्त्रीलिङ्गेन निर्देशः, नहि आत्मनो मनसः इन्द्रियाणां बाह्यानां च भेदविषयस्य व्यवस्थापनं व्यवस्था च युज्यते—अभिसंधानाद्ययोगात् अप्रकाशत्वात् च, सैव खेचरी कामक्रोधादिरूपतया वैषम्येन लक्ष्यते, तस्याः समता सर्वत्रैव परिपूर्णभैरवस्वभावात् अणुमात्रमपि अविकलानुत्तरस्वरूपापरिज्ञानमेव चित्तवृत्तीनां वैषम्यं, स एव च संसारः[८०]

७९ सा हि परमेश्वरस्य स्वरूपादभिन्ना शक्तिरेकैव तात्त्विकी इदमिति परामर्शभेदमात्रजन्मना नानारूपविभक्तभावभेदेन अवभासमाना सती बहुत्वेनापि व्यपदेशमर्हतीति। शक्तिशब्देन च व्यक्तिव्यपदेशः, परमेश्वराच्छक्तिमतो भेदाभावप्रतिपादनमेव प्रयोजनमिति।

८० संसारो गमनागमनादिरूपः। तदेव द्रढयति अपूर्णेति। अपूर्णाभिमननं द्विविधम् एकः प्रकाशस्य स्वातन्त्र्यहानिरूपः, द्वितीयः स्वातन्त्र्याबोधरूपः, तत्रैकत्वेन व्यपदेशः स्वस्वरूपापहानेरेकत्वात्।

पं० ४ ख० पु०तत्र स्त्रीति पाठः।

अपूर्णाभिमानेन स्वात्मनि अणुत्वापादनात् आणवमलस्य, तदपूर्णरूपपरिपूर्णाकाङ्क्षायां[८१] भेददर्शनात् मायाख्यस्य[८२] मलस्य, तच्छुभाशुभवासनाग्रहेण कार्ममलस्य च उल्लासात्,[८३] स्वरूपापरिज्ञानमयतद्वैषम्यनिवृत्तौ[८४] मलाभावात् क्रोधमोहादिवृत्तयो हि परिपूर्णभगवद्भैरवभट्टारकसंविदात्मिका एव। यदुक्तं श्रीसोमानन्दपादैः

'........................उत्सरत्प्रकृतिः शिवः।'

इति। तथा

'सुखे[८५] दुःखे विमोहे च स्थितोऽहं परमः शिवः।'

इति।

---

८१ '...................अभिलाषो मलोऽत्र तु।'

इति नीत्या।

८२ 'भिन्नवेद्यप्रथात्रैव मायाख्यं जन्मभोगदम्।
कर्तर्यबोधे कार्मं तु मायाशक्त्यैव तत्त्रयम्॥'

इति।

८३ इयत्पर्यन्तम् 'अणुमात्रमपि' इत्याद्येव उपोद्घातितम् सूक्ष्मेक्षिकावधार्यमेतत्।

८४ तस्यानुत्तरस्य वैषम्यनिवृत्तौ त्रिलक्षणस्य मलस्याभावात्।

८५ क्रमात् सत्त्वरजस्तमोगुणकार्ये।

---

पं०७ ख० ग० पु० भट्टपादैरिति पाठः।

'दुःखेऽपि प्रविकासेन स्थैर्यार्थे धृतिसंगमात्।'

इत्यादि । क्रोधादिवृत्तयो[1] हि चिच्चमत्कारतादात्म्यात् अन्यथा तत्स्वरूपलाभस्यैव अयोगाच्च, परमेश्वर्यः करणदेवता एव भगवत्यस्तास्ताः क्रीडा वितन्वत्यः शिवार्कस्य दीधितिरूपाः, तथा ता एव तत्तत्परस्परसांकर्यलब्धासंख्येयरूपाः तत्तदुच्चाटन-मारण-शान्त्यादिरूपेषु कर्मसु परिकल्पिततत्तत्समुचितसौम्यरौद्रप्रकाराः कृत्यादि[2]भेदात् देवतात्वेन[3] उपास्या उक्ताः मतादिशास्त्रेषु भगवद्भैरवभट्टारकपरिवारभूताश्च । यथोक्तम्

1 आभ्यन्तरक्रोधादिवृत्तय एव ।

२ 'वामा संसारवमनात्' इत्यादिः कृत्याभेदः स्वयमेवोह्यः ।

३ परिवारेति शक्तयः । यथोक्तम्

'बहिर्मुखस्य मन्त्रस्य वृत्तयो याः प्रकीर्तिताः ।
ता एवान्तर्मुखस्यास्य शक्तयः परिकीर्तिताः ॥'

इति ।

पं० १ ख० पु० धृतसंगमादिति, ग० पु० वृत्तिसंगमादिति च पाठः ।

पं० २ क० पु० चमत्कारदार्ढ्यादिति पाठः ।

पं० ४ ख० पु० एव भगवत्य इति वाक्यं नास्ति ।

पं० ६ क० पु० देवत्वेनेति, उपास्याः प्रसिद्धा उक्ता इति च पाठः ।

पं० १० क० पु० उक्ता उच्चाटनादिमतादि इति पाठः ।

'उच्चाटने काकवक्त्रा............ ।'

इत्यादि उपक्रम्य

'ता एव देवदेवस्य रश्मयः कादिधारिकाः ॥'

इत्यादि । तथात्वेन तु अपरिज्ञातस्वरूपाः चिच्चमत्कारं विकल्पेऽपि निर्विकल्पैकसारं तेन तेन विचित्रवर्णाक्षरपुञ्जात्मना घोरतरात्मना विकल्परूपेण देवतात्मना शङ्कातङ्कानुप्रवेशेन तिरोदधत्यः सांसारिकपाश्यपशुभावदायिन्यः। यथोक्तम्

'पीठेश्वर्यो महाघोरा मोहयन्ति मुहुर्मुहुः ।'

इति । तथा

'विषयेष्वेव संलीनानधोऽधः पातयन्त्यणून् ।'

इत्यादि । तथा

'[1]शब्दराशिसमुत्थस्य शक्तिवर्गस्य भोग्यताम् ।
कलाविलुप्तविभवो गतः सन्स पशुः स्मृतः ॥'

---

1 अकारादिः क्षकारान्तः शब्दराशिः । शक्तिवर्गस्य – कादिवर्गस्य, कलाभिः – ककाराद्यक्षरैः ।

---

पं० १२ क० ख० पु० विषयेष्वपीति पाठः ।

इति । ज्ञातस्वरूपाः ता एव उक्तयुक्त्या जीवन्मुक्ताप्रदायिन्यः । तथा उक्तम्

'यदा त्वेकत्र[1] संरूढस्तदा तस्य लयोद्भवौ ।
नियच्छन् भोक्तृतामेति ततश्चक्रेश्वरो भवेत् ॥'

इति । स्वरूपपरिज्ञानं च एतावदेव – यत् एतासु वृत्तिषु[2] उदयसमय[3]निर्विकल्पैकरूपासु विकल्पोऽपि उदयमानो वर्णराशिसमारब्धतत्तद्विचित्रशब्दारूषितत्वेऽपि न तादृशेन वर्णपुञ्जात्मना शक्तिचक्रेण युज्यते, यत् तस्य प्राक्तननिर्विकल्पैकव्यवहारमयस्य विकल्पात्मनो मा-

१ एकत्रेति सामान्यस्पन्दे । तस्येति कादिवर्गस्य । चक्रेति आदिहान्तस्य ।

२ वृत्तिषु – क्रोधादिषु ।

३ यथोक्तम्

'यदा समग्रज्ञानाग्रज्ञातृस्पर्शदशास्वपि ।
स्थितैव लभ्यते सा च तद्विश्रान्त्या तथा फले ॥'

इति ।

पं० ३ ख० पु० लयोदयाविति पाठः ।

पं० ८ ग० पु० वर्णात्मनेति पाठः ।

पं० ९ ख० पु० युज्यते यस्य प्राक्तनेति पाठः ।

तुः स्वरूपं खण्डयेत्। न च विकल्पा अनुभवात् विकल्पान्तराद्वा भिन्नाः, अपि तु स एव एकः स्वातन्त्र्यभेदितभावोपरागलब्धभेद्भूताद्यभिधविज्ञानचक्रप्रभुः, तदेवं खेचरीसाम्यमेव मोक्षः, तत् च अनुत्तरस्वरूपपरिज्ञानमेव[1] सततोदितं परमेश्वर्याः शिवात्मनि संघट्टसमापत्त्या उभयविमर्शानन्दरूढि। शिवो हि परवाङ्मयमहामन्त्रवीर्यविसृष्टिमयः परमेश्वरीविसृष्ट्या तद्वीर्यघनतात्मकप्रसूननिर्भरया[2] सृष्ट्या युज्यते। तथा हि सर्वेषामन्तर्बहिष्करणा-

---

१अनुत्तरेति, अयमत्राभिप्रायः—न चात्र एतन्मन्तव्यं यदि स्वरूपमेव मोक्षः तदलं खेचर्या, खेचरी हि शक्तिदशा आम्नायेषूक्ता, अनुत्तरस्वरूपं सर्वाध्वोपरिवर्तीति, यतोऽत्र अनुत्तरस्वरूपपरिज्ञानं मोक्षः, तच्च खेचर्यैव सूक्ष्मतमविमर्शरूपया सिद्ध्यतीति।

२ तस्य अनुत्तररूपस्य प्रकाशस्य वीर्यं परिस्फुरणं बाह्यवीर्यं च, तेन घनात्मकं तत्तादात्म्येन वर्तमानं च तत् प्रसूनं विश्वलक्षणमिदन्तास्फुरणं बाह्यप्रसिद्धं च तेन निर्भरया संकुलया सृष्ट्या तादृक्क्रियारूपया।

---

पं० ३ ग० पु० लब्धभेदाद्यभिधेति भूतशब्दहीना पाठः।

नां यत् यत् अनुप्रविशति तत्तत् मध्यनाडी[1]-भुवि सर्वाङ्गानुप्राणनसारायां प्राणात्मना चेतनरूपेण आस्ते यत् ओज इति कथ्यते, तदेव सर्वाङ्गेषु अनुप्राणकतया तदविभक्तवीर्यरूपत्वे न ततोऽपि पुनरपि नयनश्रवणादीन्द्रियद्वारेण बृंहकरूपं रूपशब्दादि अनुप्रविशत् बृंहकत्वादेव तत् वीर्यक्षोभरूपकामानलप्रबोधकं भवति[2]। यथोक्तम्

'आलापाद्गात्रसंस्पर्शात्.................॥'

इत्यादि। एकेनैव च रूपाद्यन्यतमेन उद्रिक्तप्राक्तनबलोपबृंहितस्य सर्वविषयकरणीयोक्षोभकरणसमर्थत्वं सर्वस्य सर्वस्य सर्वसर्वात्मक-

१ सर्वान्तरतमत्वेन वर्तमानत्वात् मध्यमिति

'यत्तत्र नहि विश्रान्तं तन्नभ:कुसुमायते।'

इति-वचनेनन, चैतन्मन्तव्यं नभःकुसुमं व्यतिरिक्तमेवेति, तदपि प्रकाशैकत्वान्न तथा इति।

२ अयमत्रभावः – प्रमाणप्रमेययोर्यत् शब्दाद्यात्म श्रोत्रादिरूपं च कलाजालं तस्य ग्राह्यग्राहकाभावात्मपरस्परसंघट्टात् यत् मेलनं ततः

'शुचिर्नामाग्निरुद्भूतः संघट्टात्सोमसूर्ययोः'

इति-नीत्या मध्यधामानुप्रवेशात् विसर्गानन्द उन्मिषति, तदनुकल्पतया यत् अन्य आनन्द उपचर्यते येन तदपि परसंविदनुप्रवेशे कारणतामेतीत्यर्थः।

पं० १ ख० पु० मध्यमनाडीति पाठः।

पं० ४ ग० पु० अविभक्तरूपत्वेनेति पाठः।

पं० १२ क० पु० कारणसमर्थत्वमिति पाठः।

त्वात् स्मरणविकल्पादिनापि सर्वमयमनोगतानन्तशब्दादिबृंहणवशात् जायत एव क्षोभः, परिपुष्टसर्वमयमहावीर्यमेव पुष्टिसृष्टिकारि न तु अपूर्णं नापि क्षीणं समुचितशैशववार्द्धकयोरिव, वीर्यविक्षोभे च वीर्यस्य स्वमयत्वेन अभिन्नस्यापि अदेशकालकलितस्पन्दमयमहाविमर्शरूपमेव परिपूर्णभैरवसंविदात्मकं स्वात-

१ अत्रायं भावः

'संकोचतारतम्येन पाशव ज्ञानमीरितम्

विकासतारतम्येन पतिज्ञानं तु बाधकम् ॥'

इति सिद्धान्तरीतिः। तत्र

'इष्टेन शिवालिङ्गेन विश्वं संतर्पितं भवेत्।'

इति। कुलादिदर्शने पुनरसौ लिङ्गपूजा निषिद्धा, तत्र लिङ्गपूजायां सर्वाध्वमयतां ते भावनयाहु 'पारमेश्वरं लिङ्गं हि गर्भीकृतनिखिलाध्वप्रपञ्चम्' इति। अन्ये पुनर्देह एव सर्वाध्वमय इति तत्रैव साक्षात्कारः सुलभः, इति किमनुपपत्तिना बाह्येन लिङ्गादिना फलम्। यदाहुः

'हृदयगुहागेहगतं सर्वज्ञं सर्वगं परित्यज्य।

प्रणमति मितमतिरशिवं शिवाशयाश्मादिमश्लाघ्यम् ॥'

इति। इह पुनः परमाद्वयदर्शने त्रिकमते तद्विधिना तन्निषेधेन वा न किंचित् प्रयोजनं, यच्चात्र कुलदर्शनं कृतं तदभिज्ञोपदर्शनफलमेव, तथा पूर्वपक्षतोद्द्योतनार्थं 'कुलात् परतरं त्रिकम्' इत्युक्तेश्च। यदुक्तं भट्टनायकेनापि अनेनैवाशयेन

'नपुंसकमिदं नाथ परब्रह्म फलेत्कियत्।

तत्पौरुषनियोक्त्री चेन्न स्यात् त्वच्छक्तिसुन्दरी ॥'

इति।

पं० ७ ख० पु० परिपूर्णमिति पाठः

न्त्र्यमानन्दशक्तिमयं सुखप्रसवभूः, नयनयोरपि हि रूपं तद्वीर्यक्षोभात्मकमहाविसर्ग[1]विश्लेषणायुक्तया एव सुखदायि भवति। श्रवणयोश्च मधुरगीतादि। अन्यत्रापि इन्द्रिये अन्यत् केवलं परिपूर्णस्राष्टितां न अश्नुते स्वात्मन्येव उच्छलनात्, तथा च तद्वीर्यानुपबृंहितानाम् अविद्यमानतथाविधवीर्यविक्षोभात्मकमदनानन्दानां पाषाणानामिव रमणीयतरतरुणीरूपमपि नितम्बिनीवदनघूर्णमान-

---

१ अत्रायं भावः—पूर्वकोटावुल्लिलासयिषाद्यात्मभिर्व्यापारैरनुपहिते निस्तरङ्गजलधिप्रख्ये अनुत्तरात्मनि विसर्गे परस्मिन् प्रकाशे प्रथममुल्लासनलीलात एव व्यतिरिक्तविमृश्याभावात् चित्परामर्शः स्फुरेत् येन अस्य सर्वत्रैव स्वातन्त्र्यमुदियात्, ततः स्वस्वातन्त्र्यमाहात्म्यादेव अनुत्तरप्रकाशात्मा परमेश्वरः स्वस्वरूपं गोपयति प्रमाणादिदशारोहेण। तत्रेत्थं क्रमः नीलसुखादिरूपेण बहिर्भावनं सृष्टिः, तथा कंचित्कालं चर्वणं स्थितिः, स्वात्मसात्कारेण संहारः, तदनु ज्ञातोऽयमर्थः इति संतोषाभिमानात् लयः, ततोऽपि बहीरूपतांविलापनेन स्वात्मन्येव विश्रमणमनुग्रहः,। उक्तं च

'परो विसर्गविश्लेषस्तन्मयं विश्वमुच्यते।'

इति।

---

पं० २ ख० ग० पु० महाविमर्शेति पाठः।

पं० ६ ख० पु० उच्छलत्वादिति पाठः

काकलीकलगीतमपि न पूर्णानन्दपर्यवसायि यथा यथा च न बृंहकं भवति तथा तथा परिमितचमत्कारपर्यवसानं, सर्वतो हि अचमत्कारे जडतैव अधिकचमत्कारावेश एव वीर्यक्षोभात्मा सहृदयता उच्यते, यस्यैव एतद्भोगासङ्गाभ्यासनिवेशितानन्तबृंहकवीर्यबृंहितं हृदयं, तस्यैव सातिशयचमत्क्रिया, दुःखेपि एष एव चमत्कारः, अन्तर्व्यवस्थितं हि यत्तत् दयितसुतसुखादि वीर्यात्मकं तदेव भावनासदृशहगाक्रन्दादिबोधेन क्षोभात्मकं विकासमापन्नं पुनर्न भविष्यति इति नैरपेक्ष्यवशसविशेषचमत्क्रियात्म दुःखसतत्त्वम् । तदुक्तम्

'दुःखेऽपि प्रविकासेन ......................।'

इति । यदा सकलेन्द्रियनाडीभूतमरुदादिपरिपूरणे तु महामध्यमसौषुम्नपदानुप्रवेशे निजशक्तिक्षोभतादात्म्यं प्रतिपद्यते तदा सर्वतो

---

पं० १० ख० पु० हगानन्दादीति पाठः ।
पं० ११ क० पु० नैरपेक्ष्यवश इति वाक्यं नास्ति ।
पं० १५ क० पु० सौषुम्न्येति पाठः ।

द्वैतगलने परिपूर्णस्वशक्तिभरविमर्शाहन्तामय-चमत्कारानुप्रवेशे – परिपूर्णसृष्ट्यानन्दरूपरुद्र-यामलयोगानुप्रवेशेन तन्महामन्त्रवीर्यविसर्ग-विश्लेषणात्मना ध्रुवपदात्मकनिस्तरङ्गाकुलभैर-वभावाभिव्यक्तिः। तथाहि तन्मध्यनाडीरू-पस्य उभयलिङ्गात्मनोऽपि तद्वीर्योत्साहबलल-ब्धावष्टम्भस्य कम्पकाले सकलवीर्यक्षोभोज्जि-गमिषात्मकम् अन्तःस्पर्शसुखं स्वसंवित्साक्षिक-मेव। न च एतत्कल्पितशरीरनिष्ठतयैव केवलं तदभिज्ञानोपदेशद्वारेण इयति महामन्त्रवीर्यवि-सर्गविश्लेषणावाप्तध्रुवपदे परब्रह्ममयशिवशक्ति-संघट्टानन्दस्वातन्त्र्यसृष्टिपराभट्टारिकारूपेऽनुप्र-वेशः। तदुच्यते

'ततः सृष्टिं यजेत् ........................।'

इत्यादि। तथा

---

पं० २ ग० पु० प्रवेशेनेति पाठः।

पं० ३ ग० पु० प्रवेशे इति पाठः।

पं० १० ग० पु० तादिच्छाज्ञानेति पाठः।

'यथा न्यग्रोधबीजस्थः ......................।'

इत्यादि । तथा

'.....................इत्येतद्रुद्रयामलम् ॥'

इत्यादि । अन्यत्रापि उक्तम्

'लेहनामन्थनाकोटैः स्त्रीसुखस्य भरात्स्मृतेः ।
शक्त्यभावेऽपि देवेशि भवेदानन्दसंप्लवः॥'

इति । भरात् स्मर्यमाणो हि संस्पर्शः तत्स्पर्शक्षेत्रे च मध्यमाकृत्रिमपरात्मकशक्तिनालिकाप्रतिबिम्बितः तन्मुख्यशाक्तस्पर्शाभावेपि तदन्तर्वृत्तिशाक्तस्पर्शात्मकवीर्यक्षोभकारी भवति इत्यभिप्रायेण । तथा

'शक्तिसंगमसंक्षोभशक्त्यावेशावसानकम् ।
यत्सुखं ब्रह्मतत्त्वस्य तत्सुखं स्वाक्यमुच्यते ॥'

इति ।

'....................स्नेहात्कौलिकमादिशेत् ।'

इति च । महावीरेण भगवता व्यासेनापि

१ बाह्यशक्त्यभावेपि शाक्तस्वरूपावेशे स्मरणपुरःसरं भावनातिशयात् तन्मयीभावः इति भावः ।

२ स्त्रीसङ्गानन्दाविर्भूतसमावेशान्ते यत् सुखं त्यक्तस्त्रीपुरुषादिपर्यालोचनं स्वात्ममात्रानिष्ठं तत् स्वाक्यमात्मन एव संबन्धि नान्यत आयातं भावयेत् स्त्रीसङ्गमस्तु व्यक्तिकारणमेवेत्यर्थः ।

'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ॥'

इत्यपि गीतम् । सोमानन्दपादैरपि निजविवृतौ

'भगवत्या रतस्थाया प्रश्न इति परैकमयत्वेऽपि
तन्मयमहदन्तरालाभिप्रायेण'

इति ।

तदलम् अमुना त्रिकशास्त्ररहस्योपदेशकथातिप्रस्तावेन । तदिदम् 'अनुत्तरं कौलिकासिद्धिदं येन ज्ञातमात्रेण खेचरीसाम्यम्' उक्तनयेन ॥ १ ॥

एतद्गुह्यं महागुह्यं
कथय स्व मम प्रभो ।

---

१ मम – परब्रह्मस्वरूपस्य, महत्–स्थूलं यतो वेद्यतया परामृश्यमानं, गर्भं–संविल्लक्षणस्ववीर्यसंक्रान्तिम्, ततः- इदन्तया परामृश्यमानात् स्वभावात् । इदमत्र तात्पर्यम् – परब्रह्मस्वरूपं परामृशत् प्रकृतिलक्षणं तत्त्वमवभासयामि तस्येदन्तायामपि चित्प्रकाशानुप्रवेशं विना प्रकाशमानस्वाभावात् ब्रह्मस्वरूपत्वं, व्यवच्छिन्नवेद्यस्वरूपत्वात् तु स्थूलम्, इति सकलजगद्भावभेदकहेतुभूतदन्तात्मकं महद्ब्रह्म मम जगत्सिसृक्षारासिकस्य योनिस्थानीयम् इति ।

---

पं० ६ ग० पु० महामन्त्रान्तरालाभिप्रायेणेति पाठः ।

गुह्यम् अप्रकटत्वात्, यतो गुहायां मायायां स्वरूपापरिज्ञानमय्यां सत्यां स्थितमपि[1] अप्रकटम्। अथ च महत् अगुह्यं सर्वस्य एवं-विधचमत्कारमयत्वात्। मातृमानमेयमयभेदाविभागशालिनी भगवती शुद्धविद्यैव त्रिकोणा मायायामतिशयप्रतिफलितभेदावग्रहा[2] भवति

१ स्थितमित्यत्र अयमाशयः–सर्वथा हि प्रकाशस्वरूप आत्मा तावत् प्रकाशत एव न केनापि अंशेन न प्रकाशते इति, अप्रकटमिति सर्वथा हृदयंगमीभावमप्राप्तमित्यर्थः।

२ चिकीर्षालक्षणपरामर्शरूपा परमेशशक्तिर्माया, ततश्च वस्तुतो विद्यैव, या हि जननभूः सा कथमविद्या, यत् पुनरस्या अविद्यात्वं तत् स्वच्छमाणजडवस्त्वपेक्षया, इयमेव सांख्यनये प्रकृतिरित्युक्ता, यत् पञ्चस्तव्याम्

'यामामनन्ति मुनयः प्रकृतिं पुराणीं
विद्येति यां श्रुतिरहस्यविदो गृणन्ति।
तामर्धपल्लवितशंकररूपमुद्रां
देवीमनन्यशरणः शरणं प्रपद्ये॥'

इति। देवी च माया, यतो हि इयमहन्ताच्छादितोन्मिमिषिविदन्तास्वरूपा स्फुटमिदमहमिति प्रतीतिरूपा, अत एव च अन्यत्र मन्त्रवीर्यत्वमस्या उक्तम्। एतद्दशामधिशयानो हि मन्त्रः स्वोचितफलदानसामर्थ्यभाक् भवतीति। उक्तं चान्यत्र

'न पुंसि न परे तत्त्वे शक्तौ मन्त्रं नियोजयेत्।
पुंस्तत्त्वे जडतामेति परतत्त्वे तु निष्फलः॥'

इति। तथा श्रीतन्त्रालोके च

'योगिनीहृदयं लिङ्गमिदमानन्दलक्षणम्।
बीजं योनिसमापत्त्या सूते कामपि संविदम्॥'

इति।

इति, मायापि जगज्जननभूः विद्येव वस्तुतः, तत् उक्तेन नयेन सा एवंभूतत्वेन अपरिज्ञायमानत्वात् अभेदमाहात्म्यतिरोहिततत्प्रमात्रादिकोणत्रयत्वात् महागुहा इति उच्यते, सैव च वस्तुतः पूजाधाम त्रिशूलं त्रिकार्थे। तदुक्तम्

'सा त्रिकोणा महाविद्या त्रिका सर्वरसास्पदम्।
विसर्गपदमेवैष[1] तस्मात् संपूजयेत्त्रिकम्॥'

इति। तथा

'उदेत्येकः समालोकः प्रमाणार्थप्रमातृगः।'

१ एतद्धामसमापत्त्या स्वातन्त्र्याख्यकौलिकशक्तेरानन्दधारा प्रसरतीत्याह विसर्गपदमिति। विसर्गपदता तस्याः तन्त्रालोके विवृता यथा

'विसर्गता च सैवास्या यदानन्दोदयक्रमात्।
स्पष्टीभूतक्रियाशक्तिपर्यन्ता प्रोच्छलस्थितिः॥'

इति, क्रमोच्छलत्तया बहिरुच्छलितमपि सत् विश्वं नवनवं भाति उक्तं चान्यत्र

'एतल्लिङ्गसमापत्तिविसर्गानन्दधारया।
सिक्तं सदेव तद्विश्वं शश्वन्नवनवायते॥'

इति। संहारक्रमोऽत्र भावनयैव लभ्यते इति। सर्वरसेति भोगमोक्षरूपमित्यर्थः। भेदाभावेनैव सृष्टेरत्र महत्त्वमित्यर्थः।

पं० ४ ख० पु० महागुह्येति पाठः।
पं० ५ ख० पु० पूजाभासेति पाठः।
पं० ६ ख० पु० त्रिकोणे इति, तथा सुखरसेति पाठः। क्रिया सर्वरसेति पाठान्तरं च।
पं० ६ ग० घ० पु० तदा त्वेक इति पाठः

इति। ततश्च ईदृश्यां महागुहायां शुद्धविद्याहृदयमय्यां महासृष्टिरूपायां जगज्जन्मभूमौ स्वचमत्काररूपेण भवति यत् 'मह-अ' इति, यत् एतत् गुह्यम् एतेन हि यत् इदमविच्छिन्नभैरवभासा विमर्शरूपं स्वातन्त्र्यं भावेभ्यः स्वरूपप्रत्युपसंहारक्रमेण आत्मविमर्शविश्रान्तिरूपत्वं, प्रकाशस्य हि स्वाभाविकाकृत्रिमपरवाङ्मन्त्रवीर्यचमत्कारात्म अहमिति[1]। यथोक्तम्

'प्रकाशस्यात्मविश्रान्तिरहंभावो हि कीर्तितः।'

इति। तदेव गुह्यम् अतिरहस्यं, तथाहि—सृष्टिक्रमेण यथा अविकृतानुत्तरध्रुवरूपविश्रान्तो भैरवभट्टारकः सकलकलाजालजीवनभूतः सर्वस्य आदिसिद्धोऽकलात्मकः, स एव-

---

१ पूर्णाहन्ताया लक्षणं यथा विरूपाक्षपञ्चाशिकायाम्

'प्रत्यवमर्शात्मासौ चितिः स्वरसवाहिनी परा वाग्या।
आद्यन्तप्रत्याहृतवर्णगणा सत्यहन्ता सा॥'

इति।

---

पं० ६ ख० पु० आत्ममातृ विमर्शरूपत्वमिति पाठः। क्रमेण प्रमातृविमर्श इति संशोधितः पाठः।

पं० १२ क० पु० विश्रान्तभैरव इति समस्तः पाठः।

प्रसरात्मना[1] रूपेण विसर्गरूपतामश्नुवानो, विसर्गस्यैव कुण्डलिन्यात्मक-ह-शक्तिमयत्वात् पुनरपि तच्छाक्तप्रसराभेदवेदकरूपबिन्द्वात्मना नररूपेण प्रसरति। तथा[2] पुनरपि तन्मूलात्रि-

१ प्रसरात्मनेति स्पन्दरूपया स्वात्मोच्छलत्तयेत्यर्थः। यदुक्तम्

'तयोर्यद्यामलं रूपं स संघट्ट इति स्मृतः।
आनन्दशक्तिः सैवोक्ता यतो विश्वं विसृज्यते॥'

इति आनन्दशक्तिरेव परविसर्ग इत्युच्यते। यथोक्तम्

'अस्यान्तर्विसिसृक्षासौ या प्रोक्ता कौलिकी परा।
सैव क्षोभवशादेति विसर्गात्मकतां ध्रुवम्॥'

इति। तत्रेत्थं क्रमः

'.................विसर्गरहिता तु सा।
शक्तिकुण्डलिका चैव प्राणकुण्डलिका तथा॥
विसर्गप्रान्तदेशे तु परा कुण्डलिनीति च।
शिवव्योमेति परमं ब्रह्मात्मस्थानमुच्यते॥
विसर्गमात्रं नाथस्य सृष्टिसंहारविभ्रमाः।'

इति।

२ तथा पुनरपीति यथा

'पूर्वं विसृज्य सकलं कर्तव्यं शून्यतानले।
चित्तविश्रान्तिसंज्ञोऽयमाणवस्तदनन्तरम्॥
दृष्टश्रुतादितद्वस्तुप्रोन्मुखत्वं स्वसंविदि।
चित्तसंबोधनामोक्तः शाक्तोल्लासभरात्मकः॥
तत्रोन्मुखत्वतद्वस्तुसंघट्टाद्वस्तुनो हृदि।
रूढेः पूर्णतयावेशान्मितचित्तलयाच्छिवे॥
प्राग्वद्भविष्यदौन्मुख्यसंभाव्यमिततालयात्।
चित्तप्रलयनामासौ विसर्गः शांभवः परः॥'

इति।

पं० १ ख० पु० विमर्शरूपेति पाठः।
पं० २ ख० पु० विमर्शस्येति पाठः।

स्फुटयिष्यते च एतत् अविदूर एव। महे– परमानन्दरूपे पूर्वोक्ते, यदिदम् उक्तनयेन अ इति रूपं तदेव गुह्यम्, एतदेव च महा-गुह्यं–जगज्जननधाम, तथा उभयसमापत्त्या आनन्देन अगुह्यं सर्वचमत्कारमयं, त्व ! आत्मन्नेव, हे प्रभो एवंविधवैचित्र्यकारितया प्रभवनशील, आमन्त्रणमेतत्, तच्च आमन्त्र्यस्य आमन्त्रकं प्रति तादात्म्यमाभिमुख्यं प्रातिपदिकार्थात् अधिकार्थदायि । यथोक्तम्।

'संबोधनाधिकः प्रातिपदिकार्थः।'

इति। निर्णीतं च एतत् मयैव श्रीपूर्वपञ्चिकायाम् । एतत् कथय–परावाग्रूपतया अविभक्तं स्थितमपि पश्यन्तीभुवि वाक्यप्रबन्धक्रमासूत्रणेन योजय। यथोक्तं प्राक्

---

१ 'आमन्त्रणे च' इति सूत्रे प्रातिपदिकार्थातिरिक्ते आमन्त्रणे प्रथमा इति वृत्तिकारः।

---

पं० २ ग० पु० परमानन्दमय इति पाठः ॥

पं० ३ ग० पु० अधिकताधायि इति पाठः ॥

'गुरुशिष्यपदे स्थित्वा………………।'[1]

इत्यादि। पराभट्टारिकायाश्च पश्यन्त्यादिता-दात्म्यं निर्णीतं प्रागेव। तथा मम इत्यस्य प्रत्यगात्मसंबन्धित्वस्य इदंभावस्य यत् गुह्यं महश्च इत्युक्तम् अहमिति। तथा हि मम इदं भासते इति यत् भासनं, तस्य विमर्शः पुनरपि अहंभावैकसारः, स पुनः अहंभावो भावप्रत्युपसंहरणमुखेन इति महश्च इत्ये-तद्रूप एव यथोक्तं प्राक्। यदुक्तम्

'इदमित्यस्य विच्छिन्नविमर्शस्य कृतार्थता।
या स्वस्वरूपे विश्रान्तिर्विमर्शः सोऽहमित्ययम्॥'

इति। अन्यत्रापि

'घटोऽयमित्यध्यवसा नामरूपातिरेकिणी।
परेशशक्तिरात्मेव भासते न त्विदन्तया॥'
(ई० प्र० अ० १ आ० ५ श्लो० २०)

---

१ 'ममेदं भासते' इति इदंपदस्य स्वात्मनि असत्कल्पत्वात् संहार-क्रमेण मदीयं स्फुरणं स्पन्दनरूपतामाविष्टम् इत्यनेन अहंपरामर्शैक-सार एव व्यपदेश्यः, न तु अत्र कश्चित् सृष्टिक्रमो नापि संहारक्रम इत्य-वधार्यं स्वयमेव सूक्ष्मदर्शिभिः।

इति । तदुक्तं श्रीसोमानन्दपादैः निजविवृतौ ।

'अबीजं शुद्धशिवरूपम्'

इत्यादि । तदेव अस्माभिः विपश्चितमिति । तथा स्वमम—सुष्ठु अविद्यमानं मम इति, यस्य अहन्ताभरैकरूपत्वात् विश्वं न किंचित् यस्य व्यतिरिक्तनिर्देशप्राणषष्ठ्यर्थयोगि भवति । शास्त्रान्तरदीक्षितानां विज्ञानाकलानां प्रलयकेवलिनां च यद्यपि ममेति व्यतिरिक्तं नास्ति तथापि यत् भेदयोग्यतावसाना स्यादेव प्रबोधसमये तद्विकासात् अहंभावरूढिः तदपाकृत्यै सुष्ठुशब्दार्थे सुः । यदुक्तं मयैव स्तोत्रे

'यन्न किंचन ममेति दीनतां
प्राप्नुवन्ति जडजन्तवोऽनिशम् ।
तन्न किंचन ममास्मि सर्वमि-
त्युद्धुरां धुरमुपेयिवानहम् ॥'

---

१ तन्नेति तेषां निषेधरूपम् अत आह सर्वमस्मीति ।

---

पं० ८ ख० ग० पु० व्यतिरिक्तताऽस्ति इति पाठः ।

पं० ९ क० पु० तद्भेदयोग्येति पाठः ।

पं० १० घ० पु० भावारूढा इति पाठः ।

इति। शोभनेन द्वैतकलङ्काङ्कनाकालुष्यलेशशून्येन अमेन परमार्थोपदेशाद्वयात्मना ज्ञानेन, मानम् अवबोधो यस्य स्वप्रकाशैकरूपत्वात्। अमतीति अमा, अ इति मा, यत्र अविद्यमानं मा मानं निषेधश्च यत्र, नित्योदितत्वात् संहारश्च यत्र नास्ति, सा भगवती अमा इति उच्यते। मा शोभना सततोदिता यत्र मायां प्रमाणप्रमेयव्यवहृतौ सा तादृशी मा यस्य इति बहुव्रीह्यन्तरो बहुव्रीहिः। परमेश्वरो हि प्रमाणादिव्यवहारेऽपि परशक्तिमय एव सर्वथा अद्वैतरूपत्वात् तस्य आमन्त्रणमात्मन एव ॥ १½ ॥

इदमेव सार्धश्लोकनिरूपितानन्तप्रश्नतात्पर्यसंग्रहेण एतदुक्तं भवति इति निर्णेतुं निरूप्यते

---

पं० १ ख० पु० कलङ्काकारेति पाठः।

पं० ३ घ० पु० मा मानमिति पाठः।

पं० ८ क० पु० मायायामिति पाठः।

पं० ९ ख० पु० व्रीह्यन्त इति पाठः।

पं० १३ ख० पु० प्रश्नार्थतात्पर्येति पाठः।

हृदयस्था तु या शक्तिः
कौलिकी कुलनायिका ।
तां मे कथय देवेश
येन तृप्तिं लभाम्यहम् ॥ २ ॥

सर्वस्य [1]नीलसुखादेः देहप्राणबुद्ध्यादेश्च परं प्रतिष्ठास्थानं संविदात्म हृत्, तस्यैव निज-स्वातन्त्र्यकल्पितभेदा अया — विचित्राणि घटादिज्ञानानि, तत्स्था इयं स्फुरणमयी शक्तिः, कुलस्य नायिका शरीरप्राणसुखादेः स्फुरत्तादायिनी, ब्राह्म्यादिदेवताचक्रस्य वीर्यभूता, निखिलाक्षनाडीचक्रस्य मध्य-मध्यमरूपा जननस्थानकर्णिकालिङ्गात्मा अस्ति । तत्रैव च कुले भवा कुलरूपा कौलिकी, यद्वा कुले भवम-

---

१ नीलेति बाह्यान्तरग्राह्यस्य, देहेति ग्राहकस्य, उभयोः प्रतिष्ठास्थानं संविदित्यर्थः ।

---

पं० ७ ख० पु० यया इति पाठः ।

पं० ८ ख० पु० येयं स्फुरणामयीति पाठः ।

पं० १२ ग० पु० तत्रैव अकुलं कौलमिति पाठः ।

कुलात्म कौलं ततं यस्यामन्तः तादात्म्येन अस्ति सा कौलिकी, कुलं हि अकुलप्रकाशरूढमेव तथा भवति । यदुक्तम्

'अपि त्वात्मबलस्पर्शात् ।' (स्प०१नि० ८का०उ.)

इति । तथा

'तदाक्रम्य बलं मन्त्राः सर्वज्ञबलशालिनः ।
प्रवर्तन्तेऽधिकाराय करणानीव देहिनाम् ॥'
(स्प०२नि० १०का० )

इति । देवानां ब्रह्मविष्णुरुद्रादीनाम् ईशस्य आमन्त्रणं । तन्मे कथय इत्यपि पठन्ति श्रीसोमानन्दपादाः, व्याचक्षते च ततू तस्मात् इति । यद्वा तत् कथय येन तृप्तिं परमानन्दमयीं लभे परमाद्वयनिर्वृतिस्वातन्त्र्यरसाभवामि इति समन्वयः । व्रजामि इत्यपि पाठः । अहमित्यनेन सर्वप्रमातृजीवनरूपमेव सततं परामृश्यते, तत् च एवमभिहितस्वरूपोपदेशेन प्रत्यभिज्ञाय निजमीश्वररूपं परिपूर्णभावात्मिकां तृप्तिं विन्दाति इति प्राक् प्र-

कटितमेव । तदुक्तं सोमानन्दपादैः स्वविवृतौ

'हृदि अयो गमनं ज्ञानम्'

इत्यादि ।

इति शिवरसं पातुं येषां पिपासति मानसं
सततमशिवध्वंसे सत्तां शिवेन निवेशिताम् ।
हृदयगगनग्रन्थिं तेषां विदारयितुं हठाद्
अभिनव इमां प्रश्नव्याख्यां व्यधात्त्रिकतत्त्वगाम् ॥

तदत्र प्रश्नसर्वस्वे

## श्रीभैरव उवाच

व्याख्यातं प्रागेव एतत् किं पुनरुक्ततापादनेन, भैरवो भरणात्मको[1] महामन्त्ररवात्मकश्च, केवलमत्र शक्तिमत्प्राधान्यं[2] संहाररूपेण महश्च इत्येवं रूपम् इत्युक्तं प्राक्, स्फु-

---

१ भरणं विश्वस्य धारणं स्वात्मनि तथा स्वात्मभित्तिलग्नत्वेन पोषणं च यतोऽनेनैव अन्यत्रोक्तं 'विश्वं बिभर्ति धारणपोषणयोगेन' इति । तथा 'तेन चास्य धारणं पोषणं च' इति विश्वमयत्वेनास्य सर्वत्र स्फुरणात् विश्वं संवित्प्रकाशलग्नं चैतन्यव्यक्तिस्थानमित्याचार्याभिनवगुप्तपादा अन्यत्र । तथा स्वस्मिन्नेव स्वात्मनैव विमर्शात्मकश्चेति ।

२ प्रसरे पश्यन्त्यादिरूपतया शक्तिप्राधान्यं, संहारे पुनः शक्तिसंकोचेन शक्तिमत्प्राधान्यं सुबोधमेवेति ।

टीभविष्यति च अग्रत एव। तत् इयान् अत्र तात्पर्यार्थः।

[1]परा भगवती संवित्प्रसरन्ती स्वरूपतः।
परेच्छाशक्तिरित्युक्ता भैरवस्याविभेदिनी॥
तस्याः प्रसरधर्मत्वज्ञानशक्त्यादिरूपता।
परापरापराख्यपश्यन्त्या[2]दिवपुर्भृतिः॥
तदेवं प्रसराकारस्वरूपपरिमर्शनम्।
प्रश्न इत्युच्यते देवी तन्मयप्रश्नकारिणी॥
[3]तस्य प्रसररूपस्य परामर्शनमेव यत्।
तदेव परमं प्रोक्तं तन्प्रश्नोत्तररूपकम्॥
[4]तदेवापरसंवित्तेरारभ्यान्तस्तरां पुनः।
परसंविद्घनानन्दसंहारकरणं मुहुः॥

---

१ परेति अनुत्तरस्वरूपा निराकाङ्क्षा पूर्णेत्यर्थः। स्वरूपसत्तया प्रसरन्ती अभ्युपगमरूपत्वादिच्छाशक्तिः सापि परानुत्तररूपैवेत्यर्थः तत्रैव हेतुमाह 'भैरवस्याविभेदिनी इति। तत्रेत्थं क्रमः—औन्मुख्ये इच्छा सा परैव, ज्ञानशक्त्यौन्मुख्ये पश्यन्ती, स्थितौ तस्याः क्रियाशक्त्यौन्मुख्ये मध्यमा, स्थितौ वैखरीति।

२ आदिना मध्यमावैखरीग्रहणम्।

३ प्रश्नसतत्त्वमुक्त्वा परस्परं प्रश्नोत्तरसतत्त्वमाह तस्येत्यादि।

४ व्यस्ततयोत्तरस्वरूपमाह तदेवापरेत्यादि।

---

पं० ३ ख० पु० धर्मित्वज्ञानेति पाठः

पं० ७ ग० पु० प्रसृताकारं स्वरूपेति पाठः।

अन्तर्भावितनिःशेषप्रसरं भैरवं वपुः ।
प्रतिवक्तृस्वरूपेण सर्वदैव विजृम्भते ॥
एतौ प्रसरसंहारावकालकलितौ यतः ।
तदेकरूपमेवेदं तत्त्वं प्रश्नोत्तरात्मकम् ॥
तदेवं परसंबन्धमनुत्तरतयान्वितम् ।
षडर्धसारसर्वस्वं गुरवः[1] प्राङ् न्यरूपयन् ॥

पफिलउ फुरइ फुरण
अवि आरिणा होइपरावर
अवराविहइण
देवि विसरिम इऊ उ ।
सासच्चिअ परिसारि
सेइसऊअउदेउ
विलोमइ भैरव ऊअउ
उत्तरु एहु अणुतुल ॥

शृणु देवि महाभागे
उत्तरस्याप्यनुत्तरम् ॥ ३ ॥
कौलिकोऽयं विधिर्देवि
मम हृद्व्योम्न्यवस्थितः ।
कथयामि सुरेशानि
सद्यः कौलिकसिद्धिदम् ॥४॥

1 गुरव इति श्रीशंभुनाथादयः ।

पं० ५ ख० पु० तदेव परेति पाठः ।

देवि इति प्राग्वत् । महान् भागो यस्याः, या भज्यमाना उक्तवक्ष्यमाणोपदेशानुशीलनेन सेव्यमाना पारमेश्वर्याख्यमहाबलदा भवति इति । महत्—परममहद्रूपतया प्रसिद्धोऽनाश्रितशिवरूपः स यस्याः भागः अंशः, पारमेश्वरी हि शक्तिः अनन्तषट्त्रिंशदादितत्त्वगर्भिणी । महान्—बुद्ध्यादिः तत्त्वविशेषो भागो विभागकलापेक्षि रूपं यस्याः, पारमेश्वरी हि संविदेकघनशक्तिः स्वस्वातन्त्र्योपकल्पिताभिन्नज्ञेयकार्यप्रतिष्ठापदत्वे बुद्धिरित्यु-

---

१ अयमत्राभिप्रायः, यदुक्तम्

'सदाशिवः स्वकालान्ते बिन्द्वर्धेन्दुनिरोधिकाः ।
आक्रम्य नादे लीयेत गृहीत्वा सचराचरम् ॥
नादो नादान्तवृत्त्या तु भित्त्वा ब्रह्मबिलं हठात् ।
शक्तितत्त्वे लयं याति गृहीत्वा सचराचरम् ॥
शक्तिः स्वकालविलये व्यापिन्यां लीयते पुनः ।
ततस्तेन क्रमेणैव लीयते साप्यनाश्रिते ॥
सोऽपि याति लयं साम्यसंज्ञे सामनसे पदे ।
सा शक्तिः साम्यसंज्ञा स्यान्नित्याकल्पा कलात्मिका ॥
यत्तत्सामनसं रूपं तत्साम्यं ब्रह्म विश्वगम् ।'

इति ।

च्यते। यदुक्तं श्रीसोमानन्दपादैः

............................अपरास्थितौ[1],
सा बुद्धिर्यत्पुनः सूक्ष्मं सर्वादिक्कमवस्थितम्[2]।
ज्ञानं बोधमयं तस्य शिवस्य सहजं सदा॥

इति। भागो भेदः स यत्र अस्ति रूपे इति मत्वर्थीयाकारप्रत्ययान्तेन भागशब्देन विभक्तं रूपमुच्यते। विभक्ते च वपुषि परिच्छेदोऽन्योन्यव्यवच्छेदनैव भवति इति प्रसादात्मकविषयनिश्चयो बुद्धावुपजायमानोऽपरर[3]म्यारम्यादिविश्ववर्तिनो भावान् अस्पृशन्नेव,

१ अत्र कैश्चिदित्थं विकल्पितं,—निर्विमर्शः शुद्धः प्रकाश इति, सविमर्शत्वे हि सविकल्पत्वमापतेत्, तथाहि जानातीति ज्ञानं बोधो बुद्धिवृत्तिः कथं वृत्तिमतीं बुद्धिं विना स्यात्, इतो बुद्धिः प्रकृतेः प्रजाता जडा, न च तया तस्य शिवतत्त्वस्य संबन्ध इति, तथा चोक्तं पूर्वपक्षव्यवस्थायां श्रीमत्सोमानन्दपादैः

'बुद्धिं विना कथं बोधः सा बुद्धिः प्रकृतेः प्रजा।
न च तस्य तया योग इति चेत्............... ॥'

इति। अत्रान्यैरित्थमुत्तरो दत्तः,—अपरावस्थायामख्यात्युल्लासितेषु भिन्नेषु भावेषु बुद्धिरुच्यते अभेदे तु चिन्मये बोधोऽस्य सहज इति। अत्रायं पुनस्तात्पर्यार्थः,—पुर्यष्टकप्रमातृणां बुद्धिः पूर्णप्रमातृतायामबोध्यरूपं बोधमात्रमिति, ज्ञानकालेऽपि शिवसत्तास्तीति दर्शितम्।

२ प्राकृतबुद्ध्युल्लासेऽपि तत्सद्भावात् तद्विना तदभावात्।

३ अपर इति भिन्नः।

पं० ३ ग० पु० दिक्क व्यवस्थितमिति पाठः।
पं० ६ क० पु० बुद्धौ जायमानोपरीति पाठः

प्रत्युत तान् व्यवच्छिन्दन् उपजायते इति। सुखवृत्तिबुद्धेः धर्मैश्वर्यादिरूपत्वात् सत्त्वात्मको गुणनिःष्यन्दः इति गीयते। यदि तु तत्रापि अन्तस्तमाम् अनुप्रविश्यते तत् तद्द्वारेणैव तन्मूलवर्तिनि परमानन्दधाम्नि भवेदेव सततमुदयः, अत एव 'महस्य' सर्वतोऽखण्डितपरिपूर्णनिरर्गलानिरपेक्षस्वातन्त्र्यजगदानन्दमयस्य आ—ईषत् भागाः[1] सुखलक्ष-

---

१ इह खलु 'अशून्यं शून्यम्' इत्युक्त्या केवलानश्रये भावभेदाकलुषिते संविदात्मनि सत्त्वगुणवृत्तौ विश्रान्तिमासाद्य स्वात्मानमेव केवलतया साक्षात्कुर्वन् निजानन्दविश्रान्तस्तिष्ठेत्। १। ततः 'प्राक्संवित्प्राणे परिणता' इति नीत्या प्रमाणात्मनः प्राणस्य हृदयाद्द्वादशान्तं रेचकक्रमेण उदये कथंचिद्बहिरौन्मुख्यात् प्रमातृसंमतात् निजादानन्दान्निष्क्रान्तो निरानन्ददशास्थस्तिष्ठेत्। २। ततोऽपि अपानात्मनि प्रमेये पुनरुदयति परेण प्रमेयेण कृतमानन्दं विभावयेत् यतस्तत्र प्रमेयोदयदशायामपि परानन्दस्तिष्ठेत्। ३। ततोऽपि हृदये क्षणं विश्रम्य नीलसुखादिप्रतिभासमानमेयानामन्योन्यमेलनात्मना संघट्टेन ब्रह्मानन्दनिष्ठस्तिष्ठेत्। ४। ततोऽपि मानमेयौघग्रासतत्परः संघट्टनपरायणः प्रमातृसंमतमानन्दं विभावयेत्— स्वात्ममात्रविश्रान्तिरूपतया विमृशेत् महानन्दमयस्तिष्ठेत्। ५। ततोऽपि एतत्सर्वानुसंधातृरूपस्वात्मप्रकाशरूपे जगदानन्दे तिष्ठेत्। ६। यदुक्तं तन्त्रालोके जगदानन्दस्वरूपम्

'यत्र कोऽपि व्यवच्छेदो नास्ति यद्विश्वतः स्फुरेत्।
यदनाहतसंवित्ति परमामृतबृंहितम्॥
यत्रास्ति भावनादीनां न मुख्या कापि संगतिः।
तदेतज्जगदानन्दमस्मभ्यं शंभुरूचिवान्॥

---

पं० २ ख० पु० सुखवर्तिबुद्धेरिति, क० पु० धर्माधर्मैश्वर्येति च पाठः।

णा अंशा यतः, यत् यत् किल सुखं तत् महानन्दनिर्वृतिपरमधाम्नि विसर्गशक्तौ अनुप्रवेशात् तथाऽचेत्यमानतया कियद्रूपतां प्राप्तम्। तदुक्तं भट्टनारायणेन

'त्रैलोक्येऽप्यत्र यो यावानानन्दः कश्चिदीक्ष्यते ।
स बिन्दुर्यस्य तं वन्दे देवमानन्दसागरम् ॥(६१ श्लो०)

इति प्राङ्न्येन यदुक्तं 'महत्र' इति रूपं तदेव भजनीयं यस्याः, परमेश्वरस्य हि स्वचमत्कारबृंहितं यत् 'अहम्' इति तदेव शाक्तं वपुः, तदेव च पराभट्टारिकारूपमिति उच्यते, अत एव सैव च परमेश्वरी सर्वं शृणोति – श्रवणाख्यया सत्तया तिष्ठन्ती श्रवणसंपुटस्फुटक्रामिकस्वस्पन्दमयवर्णराशिनिष्ठमैकात्म्यापादनरूपसंकलनानुसंधानाख्यं स्वातन्त्र्यं, तेन हि विना कलकललीनशब्दविशेषं शृण्वन्नपि – न शृणोमि

१ भवाभवातिभवरूपे ।

पं० ७ ख० पु० तदेव रूपमिति पाठः ।
पं० १३ क० पु० संकल्पनानुसंधानेति पाठः ।

इति व्यवहरति प्रमाता । कलकलमात्रविषयमेव तु संकलनामिति तत्रैव श्रुतमिति व्यवहारः। वस्तुतस्तु स कलकलध्वनिः श्रोत्राकाशे अनुप्रविशन् न वर्णान् अनुप्रवेशयन् तथा भवेत् तद्वर्णातिरिक्तस्य कलकलस्यैव भावात्, तद्वर्णविशेषविवक्षायां च कलकलस्य च कारणाभावादेव अनुत्पत्तिः स्यात् – तद्विवक्षोत्पन्नस्फुटवर्णमयशब्दकार्यत्वेपि सजातीयशब्दोत्पत्त्यनुपपत्तेः । सर्वथा त एव वर्णाः तेन स्फुटरूपेण संकलनामगच्छन्तः कलकलशब्दवाच्याः तत्संकलनावधानोद्युक्तस्य भवेदेव कि-

१ 'तस्मादेकः क्रमविरहितः कल्पितासत्यभागो
वाक्यस्फोटो जनयति मतिं तादृशि स्वाभिधेये।
वर्णास्ते ते प्रकृतिलघवः कल्पनैकप्रतिष्ठा-
स्तास्मिन्नर्थे विदधति धियं नेत्यलं तत्कथाभिः ॥'

इति स्फोटवादो वैयाकरणैरुपगतः।

पं० ३ ख० पु० स इति नास्ति ।
पं० ५ ख० पु० कलकलस्यैव अभावादिति पाठः ।
पं० ७ ख० पु० अनुपपत्तिरिति पाठः ।
पं० ८ क० पु० शब्दोत्पत्त्युपपत्तेरिति पाठः ।
पं० ११ क० पु० संकल्पनाधानोद्युक्तस्य भवेदपि कियदिति पाठः ।

यन्मात्रस्फुटोपलम्भ इति संकलनमेव अत्र उपयोगि। संकलनं च भगवती सैव परा परमेश्वरी करोति। यदुक्तम्

'तदाक्रम्य बलं मन्त्राः (स्प० २-१०)

इत्यादि। वस्तुतो हि शृणोति पश्यति वक्ति गृह्णाति इत्यादि भगवत्या एव रूपम्। यथोक्तम्

'येन रूपं रसं गन्धं स्पर्शशब्दौ च मैथुनम्।
एतेनैव विजानाति किमत्र परिशिष्यते॥'
(कठ० उ० २-३)

इति वेदान्ते परमेश्वरेण। न तु श्रवणं नाम स्फुटकलकलात्मकतारगद्गदादिरूपवर्णाकर्णनमेव। तथाहि — श्रीपरमेश्वर एव श्रीस्वच्छन्दशास्त्रे जपविभागनिर्णयावसर एवमेव निरूपितवान्

'आत्मना श्रूयते यस्तु स उपांशुरिति स्मृतः।'

अत्र हि मध्यमापदे आत्मैव संशृणुते नापरः

पं० १ क० पु० संकल्पनमेवेति, ख० पु० स्फुटोपयोगि इति च पाठः।
पं० २ ख० पु० परापरा परमेति पाठः।

इत्युक्तम्, स्थानादिप्रयत्नस्फुटतायां दन्तौष्ठपुटादिसंयोगविभागेन अतिनिभृतमपि शब्दोच्चारे निकटतरवर्तिपरश्रवणमपि स्यादिति सशब्दतापत्तिरेव ।

'परैः संश्रूयते यस्तु सशब्दोऽसौ प्रकीर्तितः ।'

इत्युक्तम्, यतः न चात्र निकटादिविशेषः कश्चित् इति । परप्रमातृदर्शनमात्रगोचरजिह्वोष्ठपुटादिसंयोगे तु यद्यपि आत्मन एव श्रवणं स्यात् न परस्य, तथापि मध्यमापदमेव एतत् संपद्यते – वर्णस्य बहिरात्मलाभाभावात् । वाय्वभिघातात् हि स्फुटवर्णनिष्पन्न एव, न च तत्र वाय्वभिघातो बाह्यतापत्तिपर्यन्तः स्यात् । ओष्ठादिचलनमपि न तत्र वर्णांशेऽनुप्रविशेत्, अपि तु स्वात्मनिष्ठमेव तात्कालिकं तत्स्यात्, तात्कालिकोङ्गितनिमिषित-

पं० ३ क० पु० सशब्दापत्तिरेवेति, ग० पु० इति शब्दतापत्तिरेवेति पाठः ।
पं० ६ ख० पु० निकटानिकटेति पाठः ।
पं० १३ ख० पु० वर्णांशे न प्रविशेद्विति पाठः ।

करव्यापारादिस्थानीये स्फुटस्थानकरणप्रयत्न-योगे तु वर्णनिष्पत्तावपि यदि नाम ध्वनीनां तारतम्येन तारमन्द्रादिविभागे दूरादूरादिश्रवणं स्यात्, सर्वथा परैः श्रूयते—इति वैखरीपदमेव एतत्, इत्यलं प्रसक्तानुप्रसक्त्या। सैवं परमेश्वरी आमन्त्रणयोगेन स्फुटं शक्तिरूपतयोक्ता, नर[2]-शक्ति-शिवात्मकं हि इदं सर्वं त्रिकरूपमेव, तत्र यत् केवलं स्वात्मनि अवस्थितं तत् केवलं जडरूपयोगि

---

१ श्रवणलक्षणा।

२ 'स्फुटं शक्तिरूपतया उक्ता' इत्येव सविचारं स्फुटयति—नरशक्तीत्यादिना, तत्र भेदप्रधानो नरः, भेदाभेदप्रधाना शक्तिः, केवलमभेदप्रधानः शिव इति। यदुक्तं

'विभागाभासने चास्य त्रिधा वपुरुदाहृतम्।'

इति। इच्छा-ज्ञान-क्रियास्वरूपमत्र सुबोधं सृष्टिक्रमेण।

---

पं० १ ग० घ० पु० व्यापारादिस्थानीयमिति पाठः।

पं० ३ क० पु० तारतम्येतरेति, ग०पु० दूरदूरादीति च पाठः।

पं० ५ ख० ग० पु० प्रसक्त्यनुप्रसक्त्येति पाठः।

पं० ७ क० पु० शक्तिमत्तयोक्त्येति पाठः।

मुख्यतया[1] नरात्मकं घटः तिष्ठति[2] इतिवत्, एष एव प्रथमपुरुषविषयः शेषः। यत् पुनरिदमित्यपि भासमानं[3], यदामन्त्र्यमाणतया आमन्त्रकाहंभावसमाच्छादिततद्भिन्नेदंभावं युष्मच्छब्दव्यपदेश्यं तच्छाक्तं रूपं, त्वं तिष्ठसि इत्यत्र हि एष एव युष्मच्छब्दार्थः, आमन्त्रणतत्त्वं च। तथाहि यथा अहं तिष्ठामि तथैव अयमपि इति, तस्यापि अस्मद्रूपावच्छिन्नाहंभावचमत्कारस्वातन्त्र्यमविच्छिन्नाहंचमत्कारेणैव

---

१ मुख्यतयेत्यस्यायमभिप्रायः—यज्जडं स्वात्मनि अलब्धसत्ताकमेव परमार्थतः प्रकाशलग्नमेव इदानीं तावत्ताटस्थ्येन भासमानतया मुख्यतो जडमित्यर्थः ।

२ घट इति सविकल्पकं ज्ञानम्, इदमिति निर्विकल्पमित्यनयोर्विशेषः

३ 'इदमित्यस्य विच्छिन्नविमर्शस्य कृतार्थता ।
या स्वस्वरूपे विश्रान्तिर्विमर्शः सोऽहमित्ययम् ॥'

इति । तथा

'घटोऽयमित्यध्यवसा नामरूपातिरेकिणी ।
परेशशक्तिरात्मेव भासते न त्विदन्तया ॥'

इति। तत्रायं विवेकः—ये पुनर्नामरूपे ते भेदहेतुभूततया नरात्मके, यत्पुनरिदमित्यध्यवसायशक्तिः सा अभेदतया शक्तिस्वरूपा, यत आत्मेव इयमभिन्ना—अहन्ताच्छादितत्वात् ।

---

पं० ८ क० पु० अहंभावचमत्कारेणैव अभिमन्वान इति पाठः ।

अभिमन्वान आमन्त्रयते, यथार्थेन मध्यमपुरुषेण व्यपादिशति, सेयं हि भगवती परापरा, सर्वथा पुनरविच्छिन्नचमत्कारानिरपेक्षस्वातन्त्र्याहंविमर्शे अहं तिष्ठामि[1] इति पराभट्टारिकोदयः, यत्र उत्तमत्वं पुरुषस्य, यदुक्तम्

'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥'

इति। अत्र क्षराक्षररूपात् उभयतोऽपि हि उत्तमत्वम् अस्मि इत्यस्मदर्थेन उक्तम्, नहि[2] अत्र

1 तथा च विरूपाक्षपञ्चाशिकायां

'प्रथमो मध्यम उत्तम इति पुरुषा भेदिनस्त्रयोऽपि मिथः।
मत्तस्तु महापुरुषात्प्रत्यवमर्शात्मनो न बहिः॥
युष्मच्छेषापोहवदहमिति यद्भाति भिन्नमिव रूपम्।
तदिदं भागविभेदो न त्वहमेकोऽस्मि यन्नित्यम्॥'

इति।

2 ननु अहं तिष्ठामीत्यत्र शरीराद्यहन्तैव स्फुटं प्रतीयते तत्कथमत्र पराभट्टारिकोदयः? इत्यत आह—नहीत्यादि, अयं पुनरत्र भावः—स्वतन्त्रप्रकाशघनाविनश्वरवस्तुतत्त्वं हि परमार्थः तदेव स्वस्वातन्त्र्यात् गृहीतदेहाद्यहंभावोऽपि अहमित्युच्यते, तत्प्राच्यस्वरूपानपहारतोद्योतनाय। देहादेस्तु प्रत्यक्षमेव विच्छिन्नतापरमार्थत्वम् इति कथं तत्र 'अस्मीति' व्यपदेशः।

पं० ६ ग० पु० अक्षरस्यापि चोत्तम इति पाठः।
पं० ८ ख० पु० उत्तमोऽस्मीति पाठः।

सर्वत्र अहमिति परिमितं शरीरादि अपदिश्यते तस्य प्रत्यक्षेणैव ताद्रूप्यविरोधात् । तदेवमीदृशं[1] स्वयंप्रथात्मकं शिवात्मकं रूपम्, अत एव बोधस्यास्य स्वसंवित्प्रथात्मकस्य किंचिन्न ऊनं नाप्यधिकं[2] — तस्याप्रकाशरूपस्य चिन्मये अननुप्रवेशात्[3], तदपेक्षया च माध्यस्थ्यमपि न किंचित् — इत्युपचयापचय[4]मध्यस्थानीयेदन्तानिर्देश्याभावलब्धप्रतिष्ठाने न प्रभवन्ति तद्बोधाविच्छेदरूपास्मदर्थाः, विच्छेदितोऽपि युष्मदर्थ एवमेवेति, अत एव 'अलिङ्गं युष्मदस्मदी' गीते। देहगतसंख्याद्युपचारेण परापरादिशक्तिगर्भीकारात् संख्यायोगस्तु उपपद्यते,

---

१ स्वयंप्रकाशात्मकं, न तु नररूपशक्तिरूपभेदभेदाभेदतया प्रकाशाधीनमित्यर्थः ।

२ भेदाभेदरूपम् ।

३ प्रकाशरूपस्य पुनः चित्स्वरूपेऽनुप्रवेशादित्यर्थसिद्धम् ।

४ उपचयः प्रकाशे, अपचयः घटे, माध्यस्थ्यं युष्मदि इति ।

---

पं० ३ ग० पु० स्वयंप्रकाशात्मकमिति पाठः ।

पं० ५ क० पु० चिन्मयानुप्रवेशादिति पाठः ।

तथाहि – स्वस्वातन्त्र्योपकल्पितभेदावभासस्य अनन्तशरीराद्येकतयैव विमृशेत् 'आवां युवां वयं यूयं' इति च, उपचयाद्यास्तु देहगता उपचरितुमपि न शक्याः – चिद्रूपस्य ऊनाधिकत्वानुपपत्तेः, सर्वं हि सर्वात्मकमिति नरात्मानो जडा अपि त्यक्ततत्पूर्वरूपाः शाक्त-शैवरूपभाजो भवन्ति – शृणुत ग्रावाणः, मेरुः शिखरिणामहं भवामि, अहं चैत्रो ब्रवीमि इत्यपि प्रतीतेः। शाक्तमपि युष्मदर्थरूपमपि नरात्मकतां भजत एव – शाक्तरूपमुज्झित्वा त्वं गतभयधैर्यशक्तिरिति अनामन्त्रणयोगेनापि प्रतिपत्तेः। भवानित्यनेन 'पादा, गुरव' इत्यादिप्रत्ययविशेषैश्चापरावस्थोचितनरात्मकप्रथमपुरुषविषयत-

---

पं० १ ग० पु० भेदावभास्यानन्तेति पाठः।

पं० ६ ग० पु० शैवरूपभाजोऽपि भवन्ति इत्यपिशब्दाधिकः पाठः।

पं० ६ ख० पु० युष्मदस्मद्रूपमपि इति पाठः

पं० १३ क० पु० वस्थोदितेति, ख० पु० पुरुषोदितविषयतयापि इति पाठः।

यापि प्रतीतिसद्भावात् त्यक्तशाक्तरूपस्यापि च अहंरूपशिवात्मकत्वमपि स्यात्। वयस्ये दयिते शरीरचित्तत्त्वमेव, अहं भवामि इति प्रत्ययात् शिवस्वरूपमपि च उज्झिताचिद्रूपमिव नरशक्त्यात्मकं वपुराविशत्येव। कोऽहम्, एषोऽहम्, अहो अहं, धिक् माम्, अहो मह्यम् इत्यादौ हि अहमिति गुणीकृत्याविच्छिन्नं स्वातन्त्र्यं, मुख्यतया तु विच्छिन्नैव इदन्ता प्रतीयते यत्र भगवत्या अपराया उदयः, हे अहम् इत्यादौ परापरशाक्तस्पन्दस्पर्श एव शिवस्य, किं तु पूर्वं पूर्वमव्यभिचारितमुत्तरत्र, तेन नररूपं स्फुटयैव प्रतिपत्त्या शाक्त-शांभवधुरमारोढुं शक्नुयादेव, न पुनर्वैपरीत्येन आरोहणं स्फुटप्रतीतिमयम् अत्यक्तनिजानिजरूपतया

पं० १ ग० पु० प्रतीतिसंभवात् इति पाठः।

पं० २ ख० पु० अहमिति शिवात्मत्वमपि, वयस्यऽदयिते च इति पाठः।

पं० ७ क० ग० पु० गुणीकृतमविच्छिन्नम् इति पाठः।

पं० ८ ग० पु० विचित्रैवेदन्ता इति पाठः।

त्र्यात्मकत्वात् एक-द्वि-बहुरूपभागित्वमेति प्र-
त्येकमेतत् त्रिकम्। उक्तं हि

'एकं वस्तु द्विधा भूतं द्विधा भूतमनेकधा।'

इति, एकात्मकत्वे हि अप्रातियोगित्वात् शि-
वताप्रतियोगिसंभवे शाक्तत्वम्, अनेकतायां
भेद एव नरात्मभाव एकस्यैव घटः घटौ घटाः
घटपटपाषाणा इत्यपि हि तिष्ठति तिष्ठतः ति-
ष्ठन्ति इति च एकेनैव क्रियाशक्तिस्फुरितमेव
एतत्, यथोक्तं

'अनेकमेकधा कृत्वा को न मुच्येत बन्धनात्।'

इति। अत एव नर-शक्ति-शिवात्मनां युगपदेक-
त्र परामर्शे उत्तरोत्तरस्वरूपानुप्रवेश एव – तस्यै-
व वस्तुतः तत्परमार्थरूपत्वात्, स च त्वं च
तिष्ठथः, स च त्वं च अहं च तिष्ठामः इति प्र-

पं० ६ ख० पु० नरात्मकभाव इति पाठः।

पं० ८ ग० पु० ऐक्येनैव क्रियाशक्तिस्फुरणमेतत् इति पाठः।

पं० ११ ख० पु० एकत्रापरामर्शे इति पाठः।

पं० १२ ख० पु० उत्तरोत्तरानुत्तरस्वरूपेति पाठः।

तीतिक्रम एव अकृतकसंस्कारसारः शाब्दि-
कैर्लक्षणैरनुगम्यते, तथा च निजभाषापदेष्व-
पि संस्कारस्य यत्र नामापि न अवशिष्यते
बौद्धान्ध्रद्राविडादिषु तत्रापि अयमेव वाचनिकः
क्रमः, वचनक्रमश्च हार्दीमेव प्रतीतिं मूलतो-
ऽनुसरन् तत्प्रतीतिरसरूपतया प्रतीतेरपि ए-
वंरूपत्वमवगमयेत्, यथोक्तं मयैव

'...न हृदयंगमगामिनी गीः।'

इति। तत् सर्वथा अकृतका एवंप्रतीतिः, य-
थोक्तम्

'न तैर्विना भवेच्छब्दो नार्थो नापि चितेर्गतिः।'

इति। श्रीमालिनीतन्त्रेऽपि।

'एवं सर्वाणुसंघातमधिष्ठाय यथा स्थिता।
तथा ते कथिता शंभोः शक्तिरेकैव शांकरी॥'

इति। श्रीतन्त्रसमुच्चयेऽपि

'नर-शक्ति-शिवावेशि विश्वमेतत्सदा स्थितम्।
व्यवहारे क्रमीणां च सर्वज्ञानां च सर्वशः॥'

---

पं० १ ग० पु० प्रातीतिकक्रम इति पाठः।
पं० ७ ख० पु० रूपत्वमेव गमयेत् इति पाठः।
पं० ६ क० ग० पु० अकृतकैवेयं प्रतीतिरिति पाठः।

इति। तदेव नरशक्तिशिवात्मकं स्फुटप्रतिपत्तिसंप्रदायोपदेशेन दर्शितं, नरः शक्तिः शिव इति तु सर्वसहः प्रतिपत्तिक्रमः परमेश्वरेच्छास्वातन्त्र्यसृष्टः, इत्यलं परशक्तिपातपवित्रितबहुश्रुतस[1]हृदयसोपदेशकतिपयजनहृदयहारिण्या प्रसक्तानुप्रसक्त्या। तत् व्याख्यातं 'शृणु देवि' इति। 'उत्तरस्यापि' इति, यदुक्तं — कथमनुत्तरमिति, तत्र प्रतिवचनम् — उत्तरस्यापि संनिहितस्य यत् अनुत्तरं, प्रागुक्तक्रमेण हि उत्तरमपि अनुत्तरतादात्म्येनैव भवेत् नान्यथा, अत एव उत्तरमपि अनादृत्य 'अनादरे षष्ठी' उत्तरं रूपं हि अनादृत[2]तद्भावमनुत्तररूपमेव, भेदो हि अयमुत्तररूपो नितरामेव अभेद-

१ सहृदया इति रसिकश्रोतारः । कतिपयेति, तथा चोक्तम्

'पूजकाः शतशः सन्ति भक्ताः सन्ति सहस्रशः ।
प्रसादपात्रमाश्वस्ता द्वित्राः सन्ति न पञ्चषाः ।'

इति ।

२ अनादृतोत्तरभावम् ।

पं० १ ख० पु० तदेतदेव इति पाठः ।

पं० १३ ख० पु० उत्तररूपोऽनुत्तरामेव इति पाठः ।

भुवमधिशय्य[1] तथा भवेत्। यथोक्तं

'परव्यवस्थापि[2] परे यावन्नात्मीकृतः परः।
तावन्न शक्यते कर्तुं यतोऽबुद्धः परः परः॥'

इति। तथा उत्तरस्यापि[3] ग्रन्थभागस्य अनुत्तरं तेनापि उत्तरीतुं न शक्यते। पश्यन्त्या[4]

---

१ अधिशय्य – आश्रित्य। तथा – भेदरूपतया।

२ परव्यवस्था – भेदनियमः। परे – भिन्नपदार्थे।

३ उत्तरस्यापीति वक्ष्यमाणस्य। अनुत्तरम् – उत्तीर्णम्।

४ पश्यन्त्या अपीति विमर्शसतत्त्वं हि प्रकाशतत्त्वं स एव विमर्शः प्रथमप्रसररूपः। यदुक्तम्

'अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा।
स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी॥'

इति। सैव चार्थप्रतिपादनेच्छारूपाविवक्षास्वरूपे मनसि विज्ञानरूपे वर्तते या मध्यमेति कथ्यते, इयं च नित्यं प्राणापानान्तरे सर्वसाधारणैकेति। यदुक्तम्

'आस्ते विज्ञानरूपत्वे स शब्दोऽत्र विवक्षया।
मध्यमा कथ्यते सैव बिन्दुनादमरुत्क्रमात्॥'

इति। पुनरपि च सैव वक्त्रनाड्यां प्राप्ता कण्ठादिस्थानविभक्तककारादिवर्णासाधारणा वैखरीत्युच्यते सैव ग्रन्थरूपेति, इत्यतस्तस्यैतत्प्रसररूपत्वात् कथं तेन निर्णेतुं शक्यते। उक्तं च

'स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा।
वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धना॥'

इति।

अपि पराभट्टारिकायाः प्रथमप्रसरत्वात्, उत्तरस्यापि च मदीयस्य एतदेवानुत्तरं परमार्थः, उत्तरस्य त्रिशूलप्रेरणादिमयस्य[1] यत् अनुत्तरं विश्रान्तिस्थानं किं तत्? इत्याह — यतः स्यात् अयं कौलिको विधिः — कौलिकः कुलाकुलात्मा प्राक् व्याख्यातो विधीयमानत्वात् विधिः महासृष्टिरूपो[2] गर्भीकृतानन्तसृष्ट्यादिकोटिशतो यस्मात्प्रसृत एतदेव तदनुत्तरं, यदुक्तम्

---

१ 'यथालोकेन दीपस्य किरणैर्भास्करस्य वा।
ज्ञायते दिग्विभागादि तद्वच्छक्त्या शिवः प्रिये॥'

इति। त्रिशूलेन लोलीभूतशक्तित्रितयेन य उत्तरः समावेशस्तस्य! यथोक्तं

'लोलीभूतमतः शक्तित्रितयं तत्त्रिशूलकम्।
यस्मिन्नाशु समावेशाद्भवेद्योगी निरञ्जनः॥'

इति।

२ महासृष्टिरूपः — शुद्धविद्यारूपः

---

पं० १ क० पु० प्रसारत्वादिति पाठः।

पं० ३ ख० पु० त्रिशूलपूरणादिमयस्य, ग० पु० त्रिशूलप्रेरणामयस्य इति पाठः।

पं० ८ ख० पु० प्रसृत एव तदनुत्तरमिति पाठः।

('......[1]यतः सर्व[2]...............')

इति। तथाहि इदं विश्वं चिच्चित्तप्राणदेह-सुखदुःखेन्द्रियभूतघटादिमयमेकस्यां वा परस्यां परमेश्वर्यां भैरवसंविदि[3] अविभागेनैव बोधात्मकेन रूपेण आस्ते, यद्यपि बोधात्म-

१ 'यस्मिन्सर्वं यतः सर्वं यः सर्वं सर्वतश्च यः।
यश्च सर्वमयो नित्यं तस्मै सर्वात्मने नमः॥'

तत्र यत एकस्मात् कर्तुः सर्वमिदं कार्यजातं प्रभवतीति 'यतः सर्वम्' इत्येकस्य तत्त्वस्य सर्वकर्तृत्वं प्रतिपादितं, तथा 'यस्मिन् सर्वम्' इति सर्वज्ञत्वम् इदमत्यन्तभिन्नाभासमयं भावजातं संवेद्यमानतामात्रनिबन्धनतत्तत्स्वात्मना सत् सुखादिसर्वावस्थानुगतैकसंवेदितृत्वमात्रस्वभावे प्रकाशात्मनि यस्मिन् स्थितं नानात्वमेवेदमित्थं यद्वशात् स्फुरतीत्यर्थः, 'यःसर्वम्' इत्यनेन स्वेच्छामात्रव्यतिरिक्तोपादानरूपवस्त्वन्तरनिरपेक्षत्वमस्योक्तम्, 'सर्वतश्च य' इत्यनेन सर्वस्मिन् वेद्ये वस्तुनि य एवैकः परिस्फुरति तेन नास्य स्वरूपविक्रियेत्यर्थः, 'यश्च सर्वमयो नित्यम्' इति कार्यानारम्भेऽपि सर्वात्मकत्वप्रतिपादनम्ः, इत्थमत्र तात्पर्यार्थः—सर्वमेकः सर्वज्ञः सर्वकर्ता निरुपादानः निरुपाधिर्नित्यं सर्वात्मकत्वेनावभासते, इति श्रीमद्राजानकरामकण्ठटीकायाम्।

२ चित् इति शून्यप्रमाता।

३ ननु च सर्वमिदं प्रकाशरूपमेवान्यथा जगतोऽन्धताप्रसङ्गस्तत्किमिति उक्तं 'संविदि अभेदेनैव बोधात्मकेन रूपेणेति' अयमत्र भावः—यद्यपि प्रकाशसत्तां विना न किञ्चित् प्रकाशते इति सत्यं तथापि परस्परं ते विच्छिन्ना एव, अनुत्तरस्वरूपे तु परस्परविच्छेदो नास्ति इति अनुत्तरत्वमस्य।

कं रूपं नास्तमेति जातुचिदपि तदस्तमये अ-प्रकाशमानतापत्तेः, तथापि परस्पराभावात्मकोऽवच्छेदः तत्र नास्ति, विश्वात्मान[1] एव भावाः, तत्र च यदि एषामवस्थितिः न स्यात् तत् प्रथमानुसंधानादिकमेव अक्षप्रेरणोपयोग्यपि न भवेत् इति समुचितानुदितेदन्ताकमहंपरामर्शमात्राभिन्नमेव भावजातं विगतभेदकलनं तिष्ठति न तत्र कश्चित् अवच्छेदः, तथा यदि अत्र स्पष्टः सन्नयं विधिः कौलिकः स्थि-

१ 'आत्मैव सर्वभावेषु स्फुरन्निर्वृतचिद्विभुः ।
अनिरुद्धेच्छाप्रसरः प्रसरद्दृक्क्रियः शिवः ॥
स यदास्ते चिदाह्लादमात्रानुभवतन्मयः ।
तदिच्छा तावती तावत्तावज्ज्ञानं क्रिया हि सा ॥
सुसूक्ष्मशक्तित्रितयसामरस्येन वर्तते ।
चिद्रूपाह्लादपरमो निर्विभागः परस्तदा ॥'

इति शिवदृष्टौ ।

पं० २ ख० पु० तथाहि परस्परभावेति पाठः ।
पं० ३ ख० पु० विच्छेद इति पाठः ।
पं० ६ क० पु० यद्यवस्थितः सन् इति पाठः ।

तो विश्रान्तिं प्राप्तः, सर्वमिदं हि षट्त्रिंशदात्म, ततः सामान्यस्पन्दसंविदात्मनः शक्तिमतः परशक्तिप्रधानात् शिवात् स्वशक्त्या सृष्टमपि सत् तत्रैव भैरवविशेषस्पन्दात्मनि शक्तिप्रधाने स्वस्वरूपे विश्राम्येत्, तदेव स्वस्वभावनिष्ठितत्वं भावानां। यदुक्तं

'यस्मिन्सर्वं............'

इति। तदेतत् शिवशक्त्यात्मैव सामान्यविशेषरूपमेकात्मकमपि परमेश्वरेणैव उपदेशोपायप्रवेशाय पृथक्कृत्य निरूप्यमाणं वस्तुतः पुनरेकमेव स्वतन्त्रचिन्मयमहामित्यैश्वर्यशक्तिसारमनुत्तरम्। यत्र कीदृशे स्वस्वरूपेऽवस्थितः 'मम हृद्व्योम्नि' ममेति यत् एतत् हृदयं सर्वभावानां स्थानं प्रतिष्ठाधाम, नीलादीनां हि अन्ततः क्रिमिपर्यन्तं चिदंशानिविष्टानां न किंचित् नीलादि रूपमिति प्रमातुरेव

पं० १६ क० पु० नीलादिस्वरूपत्वमिति पाठः।

यत् 'ममेति' अविच्छिन्नचमत्कारांशोपारोहित्वं 'मम नीलं भातम्' इति तदेव नीलादिरूपत्व-मिति, तस्य ममेत्यस्य नीलाद्यनन्तसर्वभाव-हृदयस्य यत् व्योम यत्र तत् ममकारात्मकं विश्वं [1]वीतं सम्यक् धृतम्, अत एव त्यक्त-भिन्ननिजरूपतया शून्यरूपं व्योम यत्र, तथा ममेत्यस्य भिन्नाभिन्नरूपपरापरसंविदात्मनो यत् हृदयं पर्यन्तप्रातिष्ठाधाम 'अहमिति' त-स्यापि व्योम संहाररूपकलनेन 'म ह अ' इति नरात्मकं लीनं बिन्द्वात्मशक्तौ, म-इति कुण्ड-लिनी-ह-कलारूपायां प्रविश्य, परिपूर्णनिरर्गल-चमत्कारे सर्वाविच्छिन्ने अ-इत्यनुप्रविष्टं तथा-भवति, एतदेव मम हृद्व्योम, एवं यत इ-

१ विशेषेण इतं गतं वीतम् ।

पं० ६ क० ग० पु० म-ह-अ इति क्रमेण अ इति, इति पाठः ।

पं० १० ख० पु० निरात्मकं नीलमिति पाठः ।

पं० १२ ख० ग० पु० सर्वावच्छिन्ने इति पाठः ।

दं प्रसृतं यत्र च विश्रान्तं तदेव नित्यमनावृतस्वभावं स्वयं प्रथमानम् अनपह्नवनीयमनुत्तरम्। यथोक्तम्

'यत्र स्थितमिदं सर्वं कार्यं यस्माच्च निर्गतम्।
तस्यानावृतरूपत्वान्न निरोधोऽस्ति कुत्रचित्॥'

इति। आवरकत्वेन निरोधकाभिमतोऽपि हि तदावरणादिस्वातन्त्र्येण प्रकाशमानो ह्यक्रियात्मक एव परमेश्वरः, यदित्ययं निपातः सर्वविभक्त्यर्थवृत्तिः अपरवाक्यीयसंबन्धौचित्यात् विशेषे स्थास्नुरत्र पञ्चम्यर्थे सप्तम्यर्थे च वर्तते। अयं हि आं[1]अस्येन अर्थः—यदेयं[2] कौलिकः सृष्टिप्रसरः, यच्च मम हृद्व्योम्नि अवस्थितः तदेवानुत्तरम्। एवं तस्यैव प्रसरविश्रान्त्युभ-

१ सूक्ष्मार्थविवेकं विनापि।
२ यत्—यस्मात्।

पं० २ क० पु० प्रथमानं ह्यपह्नव इति, ख० पु० प्रथमामिति इति पाठः।
पं० ११ क० पु० आसमञ्जस्येनेति पाठः।

यस्थानत्वं निरूप्य प्रसरक्रमस्वरूपं क्रियाशक्तिस्पन्दविसर्गं निरूपयति 'कथयामि' इत्यादि, तदेव हि रूपम् अहं परानुत्तरात्मपरापरादिमयपश्यन्त्यादिप्रसरपरिपाट्याऽविच्छिन्नैकतापरमार्थः, कथयामीति समुचितव्यपदेशं पराभट्टारिकोदयभागिवैखर्यन्तं वाक्यप्रबन्धं शास्त्रीयलौकिकादिबहुभेदं व्यक्तयामीति, तदुक्तम्

'......सर्वतश्च यः'

इति। प्रथमपर्यन्तभुवि पराभट्टारिकात्मनि तत्प्रसरात्मनि च परापरादेवतावपुषि अनुत्तरध्रुवपदविजृम्भैव, तदाहुर्निजाविवृतौ[1] श्रीसो-

1 तथैव शिवदृष्टावपि

'यदा तु तस्य चिद्धर्मविभवामोदजृम्भया।'

इत्याद्युक्तम्। श्रीमदुत्पलदेवप्रभुपादैरपि

'स्फारयस्यखिलमात्मना स्फुरन्
विश्वमामृशसि रूपमामृशन्।
यत्स्वयं निजरसेन घूर्णसे
तत्समुल्लसति भावमण्डलम्॥'

इति।

पं० ५ क० पु० अविच्छिन्नैकपरमार्थ इति पाठः।

मानन्दपादाः—कथयामि इति उच्चारयामि उ
त्कालिकात इति, तथाहमेव सर्वस्य अन्तर्धि-
द्रूपेण कथयामीति, तदेवास्माभिः युक्त्युपदे-
शसंस्कारैः निर्मलय्य हृदयङ्गमीकृतम्। स्वरूपं
चास्य परमेश्वरस्य सद्य इति—'य एव च पर-
मेश्वरो भैरवात्माकुलानुत्तरध्रुवधामतया'—उ-
क्तम् तदेवेदं सर्वं सत् कौलिकाविधिरूपं, न-
हि प्रकाशविमर्शशुद्धभैरवस्वरूपातिरेकि किं-
चित् भावानां सत्त्वं, सत्तासंबन्धार्थक्रियाका-
रित्वादीनामपि सत्ताहेतुता पराभिमतानामपि
सत्तायोगे तथात्वानुपपत्तेः सत्त्वान्तरार्थक्रिया-
न्तरयोगे चानवस्थापत्तेः, प्रथमत एव तथा
विमर्शजीवितप्रकाशमयत्वमेव सत्त्वं, तत् च
स्वातन्त्र्यविमर्शसाराहंभावभरितामिति भैरव-
रूपमेव। यद्वा सति सद्रूपे यस्याति यत्नं क-
रोति क्रियाशक्तिप्राणत्वात् तत् सद्य इति

पं० ४ ख० पु० निर्दलय्येति पाठः।

क्विपि नपुंसकनिर्देशः, सद्यदिति केचित् गुरवः पठन्ति। तदुक्तं श्रीसिद्धसन्ताने

'प्रकाशमानाभासैव यद्भूतिस्तत्सदेव हि।'

इति। श्रीस्पन्देऽपि

'......तदस्ति परमार्थतः।'

इति। श्रीसोमानन्दपादैरपि

'यत्सत्तत्परमार्थो हि परमार्थस्ततः शिवः।'

इति स्वरूपमुक्तम्। तदुक्तं

'यः सर्व............'

इति। अस्यैव क्रियाशक्तिप्रसरं निरूपयति 'कौलिकसिद्धिदम्' इति, कौलिकं यत् व्याख्यातं तस्य सिद्धिः तथात्वदार्ढ्यं तत् यतो भवति, तत्र हि परमार्थप्रमातरि सकलं कुलाकुलादि तथा भवति यत्र प्रतीयमानं सर्वं तथात्वदार्ढ्यं भजते। तदुक्तं

'......परात्परतरं त्रिकम्।'

---

पं० १६ ख० पु० कुलात्परतरमिति पाठः।

इति । अन्यत्रापि

'वेदाच्छैवं ततो वामं ततो दक्षं ततः कुलम् ।
ततो मतं ततश्चापि त्रिकं सर्वोत्तमं परम् ॥'

इति । श्रीनिशाचारेऽपि

'वाममार्गाभिषिक्तोऽपि दैशिकः परतत्त्ववित् ।
संस्कार्यो भैरवे सोऽपि कुले कौले त्रिकेऽपि सः ॥'

इति । श्रीसर्वाचारेऽपि

'वाममार्गाभिषिक्तोऽपि दैशिकः परतत्त्ववित् ।
क्रमाद्भैरवतन्त्रेषु पुनः संस्कारमर्हति ॥'

इति । क्रमश्च एष एव, यथोक्तम्—एवं यत् सर्वलोकवेदसिद्धान्तवामदक्षिणकुलमतभूमिषु परमार्थप्रमातृ इति । यथोक्तम्

'यश्च सर्वमयो नित्यं तस्मै सर्वात्मने नमः ।'

इति । तदेवानुत्तरमेतत्सर्वं गर्भीकृत्योक्तं निजविवृतौ सोमानन्दपादैः, किंबहुना सर्वमेवानुत्तरमनुत्तरत्वात् इति । अयं तात्पर्यार्थः—

---

पं० १० ख० पु० क्रमस्येति पाठः ।

'सअल बहुसंवेअणफुरितमत्त
उजहित हिंचि अजत्तो हित्तउपफुर ।
इज कुट्टि उस अलभाव
संवेअणरअणाणिहाणुइउ ॥
परिआणहुएत्तिअणुतुरुछत्तुहजसट्ठउसम्मूढतुणिअ-
च्छहतुहअत्तासिअऊउऊउसुबाहिरबितुरहुंबन्धुण-
मोक्खतउइरिअवहुविकुणासिबिसग्गुणिमासिद्वउपुण-
संहरसिज्जितिपविणुणुविरिअरुद्रमअलक्खहिमसर-
णिरोहचिन्तइमलक्खएकवाअपरिआणहुअत्ताणउप-
रमत्थअणणुणकोइबिआसुबहुइउसअलउसत्थत्थ ।'

इतीदृक् व्याख्यानं त्यक्त्वा यत् अन्यैः व्याख्यातं तत्प्रदर्शनं दूषणम्, यद्यपि पदवाक्यसंस्कारविहीनैः सह व्रीडावहा गोष्ठी कृता भवति तथापि सचेतसोऽनुत्तरमवबोधयितुं तत् एकवारं तावत् लिख्यते—'अनुत्तरम्' इत्यादिना सार्धेन श्लोकेन शिव[1]विषयः प्रश्नः। 'हृदयस्था'

1 अत्रायं भावः। शिवः विषयो यस्येति विग्रहः, यतः
'येन विज्ञातमात्रेण खेचरीसमतां व्रजेत् ॥'
इत्युक्तम्। तथा शक्तिर्विषयो यस्येत्येवं विग्रहो बोध्यः, यतः
'तां मे कथय देवेश·········॥'
इत्युक्तम् इति पूर्वपक्षव्याख्या, तदेव तिरासितुमाह—अत्र यदीत्यादि, तत्र अनुपपत्तिमाह तत्रेति।

इत्यादिना श्लोकेन शक्तिविषयः। तथा 'शृणु देवि' इत्यत्र प्रतिवचनग्रन्थे 'उत्तरस्याप्यनुत्तरम्' इति, तत्रार्थः उत्तरं च शृणु अनुत्तरं च इति। अत्र यदि एषा त्रिकार्थाभिप्रायेण व्याख्या तत् नरविषयतृतीयप्रश्नप्रसङ्गः। अथ तु यामलाभिप्रायेण तत्रापि न द्वे वस्तुनी शिवशक्त्यात्मके यामलमुच्यते, येन[1] पृथक् प्रश्नविषयतोपपत्तिः, अथ[2]शब्दार्थश्च न संगच्छते—स हि सजातीयनिश्चयानन्तर्यवृत्तिः उत्तरस्वरूपावधारणमन्तरेण च अनुत्तराविषयस्यैकप्रश्नस्य अनुपपत्तिः, तथा[3]हि केषुचित् वृद्धपु-

---

१ येनेति द्विवस्तुपृथक्स्वभावतया इत्यर्थः।

२ अथाद्या इत्यत्र वक्ष्यमाणः।

३ यदुक्तं तैः प्रतिवचनग्रन्थे 'उत्तरं च शृणु अनुत्तरं चेति' तन्निर्दलयितुमाह 'उत्तरस्वरूपेति' तदेव समर्थयति 'तथाहीत्यादिना'।

---

पं० ६ ख० पु० यामलताभिप्रायेणेति, क० पु० यामलमताभि इति पाठः।

पं० १० क० पु० विषयस्यैव प्रश्नस्येति पाठः।

स्तकेषु ईदृक् श्लोकान्तरं दृश्यते

'श्रुतं देव महाज्ञानं त्रिकाख्यं परमेश्वर।
उत्तरं च तथा ज्ञानं त्वत्प्रसादावधारितम् ॥'

इति। तस्मात् श्रीसोमानन्दपादनिरूपित-व्याख्यानुसारेणैव यत् गुरवः समादिक्षन् तदेव सर्वस्य करोति शिवम्।

इत्यसंस्कृतदुर्व्याख्यातामसोन्मूलनव्रतः[1]।
षडर्धशासनापूतहृदम्बुजविकासकः ॥
संस्त्यान[2]नानन्तपाशौघ[3]विलापकलसद्रुचिः।
दीप्तोऽभिनवगुप्तेन व्याख्याभानुः प्रकाशितः ॥

एवं यतोऽयं कौलिको विधिः प्रभवति, यत्र च प्रतिष्ठापदवीं भजते, यन्मयं च इदं कौलिकं, तदेवानुत्तरमित्युक्तम्। तत्र कस्तावत् कौलिको विधिः? कथं च अस्य प्रसरोऽनुत्तरात्? कथं चात्रैव अस्य प्रतिष्ठा? कथं च अनुत्तरैक-

---

१ तामसं तमोपटलम्।

२ संस्त्यानः श्यानीभूतः।

३ सूर्यपक्षे पाशौघः पिशाचादिसमूहः

रूपत्वं? यच्चोक्तम्—उत्तरस्याप्यनुत्तरमिति, तत् सर्वं[1] युक्त्यागमस्वसंवेदननिष्कर्षणतत्त्वावबोधावाप्तविमर्शनिपुणान् शिष्यान् प्रति वितत्य निर्णिनीषुः भगवान् प्रस्तौति ग्रन्थान्तरम्, एतावद्दृढोपदेशनिर्दलितभेदाभिमानाविकल्पानल्पसंस्काराणां तु सर्वमेतावतैव 'अनुत्तरं कथम्' इत्यादिसार्धश्लोकयुगलनिगमितेन[3] प्रश्नेन 'शृणु देवि' इत्यादिना सार्धश्लोकनिर्णीतेन चोत्तरेण, अनुत्तरपदप्राप्तिवशाविष्टजीव-

१ कौलिकाविधेरिति योज्यम् ।

२ युक्तिरनुभवोपयोगी तर्कः, ततश्चात्र गुरुतः शास्त्रतः स्वत इति फलितम् ।

३ निगमितेति—इत्थं मायापदे परप्रतिपत्त्यै नयः, प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि बोधहेतवः, तत्र साध्यवत्तया पक्षसाधनं प्रतिज्ञा, संदिग्धसाध्यवान् पक्षः यथा—पर्वतोऽयं वह्निमानिति, तत्रैव परप्रतिपत्त्यै लिङ्गप्रतिपादकं हेतुः यथा—धूमवत्त्वादिति, तत्रैव स्फुटप्रतिपत्तिकारणमुदाहरणम् यथा—धूमवान्यः स वह्निमान् इति महानसादौ व्याप्तिदर्शनात्, पक्षे साधनोपसंहार उपनयः—तथा चायमिति, तत्रैव पक्षे साध्योपसंहारो निगमनमिति यथा—तस्मात्तथेति, तत्र दृढशक्तिपातवतां निगमनेनैव प्रतिपत्तिरिति किं तेषामन्येन, अन्येषां तर्केणैव प्रतिपत्तिरिति वक्ष्यमाणग्रन्थावतारः ।

पं० ७ क० पु० नियमितेनेति पाठः ।

पं० विश्वनाथ एंड सन्स के अधिपत्यस्थ कश्मीर प्रताप स्टीम प्रेस
श्रीनगर में छपायागया ।

न्मुक्तभावानां कृतकृत्यता, अतस्तावन्मात्र एव दृढप्रतिपत्तिपवित्रीकृतैर्विश्रमणीयम्—इत्युद्बुजाः फूत्कुर्मः। तदनुत्तरपरभैरवपदविमलदर्पणान्तर्निविष्टकौलिकपदप्रविविक्तये ग्रन्थान्तरमवतरति, इत्युक्तम् ॥ ४ ॥

तद्यथा

अथाद्यास्तिथयः सर्वे
स्वरा बिन्द्ववसानगाः।
तदन्तः कालयोगेन
सोमसूर्यौ प्रकीर्तितौ ॥ ५ ॥
पृथिव्यादीनि तत्त्वानि
पुरुषान्तानि पञ्चसु।
क्रमात्कादिषु वर्गेषु
मकारान्तेषु सुव्रते ॥ ६ ॥
वाय्वग्निसलिलेन्द्राणां
धारणानां चतुष्टयम्।

तदूर्ध्वं शादि विख्यातं
पुरस्ताद्ब्रह्मपञ्चकम् ॥ ७ ॥
अमूला तत्क्रमाज्ज्ञेया
क्षान्ता सृष्टिरुदाहृता ।
सर्वेषामेव मन्त्राणां
विद्यानां च यशस्विनि ॥ ८ ॥
इयं योनिः समाख्याता
सर्वतन्त्रेषु सर्वदा ।

तत्राकुलमनुत्तरमेव कौलिकं—सृष्टिरूपमिति निर्णीयते । अथ तत्सृष्टिरिति संबन्धः, तदेवानुत्तरं पदं—सृष्टिरित्यर्थः, यद्यपि च सृष्टावपि प्राक्तननयेन कालापेक्षि पौर्वापर्यं न स्यात् तथापि उपदेश्योपदेशभावलक्षणो भेदो यावत् स्वात्मनि स्वातन्त्र्यात् परमेश्वरेण भास्यते तावत्पौर्वापर्यमपि—इति तदपेक्षया अथ-शब्दे-

पं० १० क० पु० कौलिकसृष्टीति पाठः ।

नानन्तर्यम्—अनन्तरमकुलमेव सृष्टिरूपमिति यावत्, न तु प्रश्नप्रतिज्ञाभ्यामानन्तर्यमथ-शब्देनोक्तम्—एकप्रघट्टकगतसजातीयप्रमेयापेक्षक्रमतात्पर्यप्रतीतिप्रवणत्वादस्य[1], अन्यथा तूष्णींभावादेरनन्तरमिदम्, इत्यपि सर्वत्र तत्प्रयोगावकाशः, अस्तु—क इव अत्र भवतः क्लेशः? इति चेत्—न कश्चित्—ऋते प्रतीत्य[2]भावात्, यत्तु श्रीसोमानन्दपादाः

'अकारः शिव इत्युक्तस्थकारः शक्तिरुच्यते ।'

इत्यागमप्रदर्शनेन अथ इत्येतावदेवानुत्तरम्[3] इति व्याचचक्षिरे, थकारहकारसमव्याप्तिकताभिप्रायेण सर्वत्र प्रथमोल्लासे प्रसरदनन्तानन्त-

---

१ अस्य—अथशब्दस्य ।

२ प्रतीतिबाध एव क्लेश इत्यर्थः, तेन नापातक्लेशः, अपि तु मूलक्लेश एवेति भावः ।

३ तथा च सति अधिकरणसिद्धान्तनीत्या यत् पूर्वमुक्तं 'यद्यपि पौर्वापर्यं न संभवति तथा तूष्णींभावादेरपि इत्यादि' तच्छङ्कैव काचिन्नास्तीति । 'एकस्मिन्कार्ये सिद्धे कार्यान्तराणि स्वयमेव सिध्यन्ति यत्र सोऽधिकरणसिद्धान्तः ।

वस्तुस्रष्टिशक्त्यभेदरूपत्वात् सर्वभूतस्थजीवन-रूपपरनादावलम्बनरूपत्वाच्च अथ-शब्दार्थस्य, तत् नास्माभिः वितत्य विवेचितम्,—तादृशस्य आगमस्य यतो न साक्षाद्वयमभिज्ञाः, तैस्तु तथा-विधागमसाक्षात्कारिभिरनेकयुक्तिशतसहिष्णुता सूत्रग्रन्थस्य सूत्रितैव, धूलिभेदप्रद[1]-र्शनमपि तेनैवा[2]भिप्रायेण तैरित[3]श्च अमुतश्च विततम्। वयं तु तच्छासनपवित्रितास्तद्ग्रन्थग्रन्थिनिर्दलनाभिलषितस्वात्मपवित्रभावाः तैः निर्णीतेषु एवमादिषु अर्थेषु उदासीना एव। धूलिभेदादिना च कल्पितसामयिक[4]लिप्यपेक्ष-

१ चूर्णिकार्थाभिधानम्।

२ तेनैव—समव्याप्तिकताभिप्रायेण।

३ तैः—सोमानन्दपादैः, इतः परात्रिंशिकालक्षणात्, अमुत इति तत्तदागमात्।

४ सामयिकः—सांकेतिकः।

पं० १ क० पु० भूतजीवेति पाठः।

पं० ३ ख० पु० वितत्येति नास्ति।

पं० ६ ख० पु० सूत्रिता, एवमिति पाठः।

णमपि भवेदपि कस्यचित्[1] उपायाय, न तु तत्सकलदेशकालगतशिष्यविषयम्—इति नास्माभिः वितत्य विपश्चितम्, एतदनुभवयुक्त्यनुप्रविष्टानां च तदकार्यकरं, स्वकल्पनाभिश्च सुकरम्, अवस्थितं च, अन्येषां च एतदुपदेशानभिज्ञानां[2] तदुपदेशनमपि अकिंचित्करम्, इत्यलमनेन प्रकृतविघ्नविधायिना। प्रस्तुतमनुसरामः—'अ' आद्यो येषां स्वराणां, यदि वा थकारेण सुखोच्चारणार्थेन सह अथ् आद्यो येषा-

---

१ यतः सर्वदेशेषु विपरीतैव वर्णरचना अतो न सर्वस्य उपायाय। कालभेदश्च इत्थमेव बोध्यः।

२ इत्थमत्र विवेकः

'निदाघतापतप्ताश्मपतिताब्बिन्दुवत्सदा।
अन्तःस्पर्शं नो करोति मूढानामुपदेशगीः॥'

तथा चोक्तमन्येन

'ज्ञेयत्वमप्युपगता हृदये न रोद्धुं
शक्ताः प्रमूढमनसामुपदेशवाचः।
आर्द्रत्वमादधति किं नलिनीदलानां
श्लिष्टा निरन्तरतयापि नभोऽम्बुधाराः॥'

इति।

---

पं० ५ ख० पु० एतावत्तदुपदेशेति पाठः।

मिति आद्य-शब्दश्च अत्र न व्यवस्थामात्रेण, अपि सामीप्यादौ, अपि तु आदौ भव आद्यः, तथापि अमीषां वर्णानां परावाग्भूमिरियमिह निर्णीयते, यत्रैव एषामसामयिकं नित्यमकृत्रिमं संविन्मयमेव रूपं, संविन्मये च वपुषि सर्वसर्वात्मकता सततोदितैव, सा च परमेश्वरी पराभट्टारिका तथाविधनिरतिशयाभेदभागिन्यपि पश्यन्त्यादिकां[1] परापराभट्टारिकादिस्फाररूपा अन्तःकृत्य तत्तदनन्तवैचित्र्यगर्भमयी, नहि तत्र 'यन्नास्ति तत् क्वाप्यस्ति इति' न्याय्यम्, परामृशत च प्रथमां प्रतिभाभिधानां संकोचकलङ्ककालुष्यलेशशून्यां भगवतीं संविदम्। तथाहि—यत्किंचित् चरमचरं च तत् पारमार्थिकेन अनपायिना रूपेण वीर्यमात्रसारात्मना तदुद्भविष्यदीषदस्फुटतमेषदस्फुटतरेषदस्फुटादिवस्तुशतसृष्टिकालोपलक्ष्यमाणतत्तदनन्त-

१ मयूराण्डरसन्यायेन परा, वटधानिकान्यायेन पश्यन्ती, माषशसिकान्यायेन मध्यमा, ततः परं वैखरी।

वैचित्र्यप्रथोन्नीयमानतथाभावेन संविदि भगवद्भैरवभट्टारिकात्मनि तिष्ठत्येव, तथावधानातिशयरूढैः सहसैव सर्वज्ञताभूमिरसंकुचितपरमार्था अकृत्रिमतद्रूपा अधिशय्यते एव, परानुग्रहपवित्रितैरभ्यासक्रमशाणानिघर्षनिष्पेषिततदप्रत्ययरूपकम्पाद्यनन्तापरपर्यायविचिकित्सामलैः सविचिकित्सैरपि प्रति[2]भातकियन्मात्रवस्तुदत्तसंकोचा न तु कृत्रिमा । यदाहुः श्रीकल्लटपादाः

'तुटिपाते सर्वज्ञत्वसर्वकर्तृत्वलाभः ।'

इति । एवमेष स्वप्रकाशैकरूपोऽपि अर्थो यु-

१ अत्रायं भावः । 'संविन्निष्ठा विषयव्यवस्थितयः' इति सिद्धान्तोक्तिः, तच्च न भिन्नरूपप्रमात्मकसंविन्मात्रविश्रान्त्या सिद्ध्यति अपि तु तत्तद्विभिन्ननिश्चयादिरूपप्रमात्मद्वारेण अमी भावा यदि चैकस्मिन्नेव अहमिति स्वरूपे तिष्ठन्ति, अन्यथा अर्थानां जडानां तज्ज्ञानानां तद्विकल्पानां तन्निश्चयानां देशकालक्रमिणां स्वरूपमात्रप्रतिष्ठानां न कश्चित् समन्वयः स्यात्। उक्तं चेश्वरप्रत्यभिज्ञायाम्

'तत्तद्विभिन्नसंवित्तिमुखैरेकप्रमातरि ।
प्रतितिष्ठत्सु भावेषु ज्ञातेयमुपपद्यते ॥'

तथा

'देशकालक्रमजुषामर्थानां स्वसमापिनाम् ।
सकृदाभाससाध्योऽसावन्यथा कः समन्वयः ॥'

इति । तथा

'इत्थमत्यर्थभिन्नार्थावभासखचिते विभौ ।
समलो विमलो वापि व्यवहारोऽनुभूयते ॥'

इति, तदेतदुक्तं तथावधानेति । अनेनैवाभिप्रायेण शिवोपनिषदि

'ग्राह्यग्राहकसंवित्तिः सामान्या सर्वदेहिनाम् ।
योगिनां तु विशेषोऽयं संबन्धे सावधानता ॥'

इति ।

२ प्रतिभातेति, अयमत्र भावः—इह नीलं गृह्णतः प्राणस्तुटिषोडशात्मा वेद्यावेशपर्यन्तमुदेति, तत्र आद्या तुटिरविभागैकरूपा, द्वितीया ग्राहकोल्लासरूपा, अन्त्या तु ग्राह्याभिन्ना तन्मयी, उपान्त्या तु स्फुटीभूतग्राहकरूपा, मध्यं यद्द्वादशकं तस्यार्धं निर्विकल्पस्वभावं विकल्पाच्छादकं, तत्र स्वरूपेणैका आच्छादनीये विकल्पे पञ्चकत्वमुन्मिमिषिषा उन्मिषत्ता, सा चेयं स्फुटक्रियारूपत्वात्तुटिद्वयात्मिका स्पन्दनस्यैकक्षणरूपत्वाभावात् उन्मिषितता स्वकार्यैककर्तृत्वं च इत्येवमाच्छादनीयविषयपाञ्चविध्यात्स्वरूपाच्च षट्क्षणा निर्विकल्पकाः, ततोऽपि निर्विकल्पस्य ध्वंसमानता, ध्वंसः विकल्पस्य उन्मिमिषिषा, उन्मिषत्ता तुटिद्वयात्मिका उन्मिषितता च इति षट् तुटयः, स्वकार्यैककर्तृता तु ग्राहकरूपता इत्युक्तं 'न सा भूयो गण्यते' इति, तत्र विकल्पन्यूनत्वे तुटिन्यूनता, एवं स्थिते यावत् स्फुटेदन्तात्मनो भेदस्य न्यूनता तावद्द्वयं द्वयं ह्रसति यावत् द्वितुटिकः शिवावेशः, तत्र आद्या तुटिः सर्वतः पूर्णा, द्वितीया सर्वज्ञानकरणाविष्टा अभ्यस्यमाना सर्वज्ञत्वसर्वकर्तृत्वाय कल्पते—न त्वाद्या, तदेतद्भट्टकल्लटेन 'तुटिपात' इति आम्नातम्—तुटेराद्यायाः पातोऽपचयोऽपरा तुटिर्द्वितीयेत्यर्थः ।

क्त्या प्रदर्श्यते—यत् यत् स्वसामर्थ्योद्भूतोत्तरकालिकार्थक्रियायोग्यतादिवशानिःशेष्यमाणसत्यतावशावाप्ताविचलसंवादं विरोधावभासिसंमतक्रमिकविकल्प्यमाननीलादिनिष्ठविकल्पपूर्वभावि निर्विकल्पसंविद्रूपं तत्तद्विकल्पनीयविरुद्धाभिमतनीलपीताद्याभासाविभागि भवति, यथा चित्रज्ञानशिखरस्थसंविन्मेचकबोधादि, यत्तु तद्विरुद्धरूपनीलपीताद्याभासाविभक्तं न भवति तत्तदनन्तस्वसामर्थ्योद्भूतनीलपीताद्या-

१ यथा चित्रज्ञाने न तावच्चित्रं रूपं न भासते—संविित्तिविरोधात्, जडस्य च प्रकाशायोगः, तेनेदं ज्ञानात्मकमेव रूपं, न च आकारभेदेन ज्ञानभेदः—चित्ररूपस्यैकस्य आकारभेदाभावात्, यथा नीलस्यैको नीलस्वभाव आकारः तथा वैचित्र्यस्यैकस्य चित्रस्वभाव एवाकारः, तस्मिंश्चात्मभूते ज्ञानं प्रवर्तमानं कृत्स्न एव प्रवर्तते यदि वा न प्रवर्तत एव न तु भागेन प्रवर्तते तस्य निर्भागत्वात्, ये त्वमी भागाः परस्परविविक्ताः प्रतिभान्ति न ते चित्रं रूपमिति भावः ।

शिखरस्थस्य हि सत्यपि गृहादिवेद्यभेदे एक एव नगरावभासः स्यात् । मेचकबोधो निर्विकल्पकनीलादिज्ञानं तत्राप्यविभाग एवेत्यर्थः ।

पं० १ क० पु० सामर्थ्याद्भूतेति पाठः ।

भासविकल्पपूर्वभाग्यपि न भवति, यथा नीलै-
कसाक्षात्कारि ज्ञानम्, भवति च इदमस्तमि-
तोदेष्यदुभयविकल्पज्ञानान्तरालवर्ति उन्मेषप्र-
तिभादि, शब्दागमगीतं[1] निर्विकल्पकं ससं-
वादविरुद्धाभिमतनीलादिविकल्पपूर्वभावि त-
स्मात्तदनन्ताभासाविभागमयमेवेति उभ-
योश्च ज्ञानयोरन्तरालमनपह्नवनीयं — ज्ञानयोर्भे-
दादेव, तच्च संविदात्मकमेव, अन्यथा तेनैव
संवित्संस्कारोच्छेदे[2] स्मरणाद्यनुसंधानाद्ययोग
इति प्रतिभाख्यस्य धर्मिणः सर्ववादिनः प्राति

१ शब्दागमः—प्रक्रियाशास्त्रम् ।

२ संस्कारोच्छेद इति, नवनवाभासाः प्रतिक्षणमुदयव्ययभाज इति व्यवहारहानिः, ततश्च कस्मिंश्चिदर्थे पूर्वगृहीते यत्संवेदनं पूर्वं बहिर्मुखमभूत् तस्यान्तर्मुखं यत् चित्स्वरूपत्वं तत्कालान्तरेऽपि अवस्थासु स्वात्मगतं तद्विषयविशेषे बहिर्मुखत्वं परामृशतीति स्मरणशक्तिः । तथानुसंधानमेकविषयभावोपपन्नस्मृतिताप्राप्तिरूपम् ।

पं० ४ क० पु० शब्दागमनिर्णीतनिर्विकल्पकसवादेति पाठः ।

पं० ९ ख० पु० संसारोच्छेद इति पाठः ।

अविवाद एव इति न असिद्धिः, संकेत-व्युत्पत्तिकालानवलम्बनात् च अस्य अविकल्पत्वमेव सहजासामयिकतथापरामर्शयोगो हि जडविलक्षणसंविद्रूपनान्तरीयको न विकल्पतुल्यत्वं—भेदानुल्लासात्, भेदसारतालब्धतया तु अर्थभावं कुर्यात्, विकल्पानां च अविकल्पं विना नोदयः—अस्वातन्त्र्यात्, अस्वातन्त्र्यं च

---

१ उक्तं हि सूत्रविमर्शिन्यामनेनैव

'विना येन न किंचित्स्यात्समस्ता अपि दृष्टयः ।
अनस्तमितसंबोधस्वरूपं तं स्तुमः शिवम् ॥'

इति ।

२ ननु च विशुद्धसंवेदनरूपे भगवति कथं परामर्शो विकल्पतुल्यः स्यात्? इत्यत आह—जडेत्यादि । उक्तंच

'स्वभावमवभासस्य विमर्शं विदुरन्यथा ।
प्रकाशोऽर्थोपरक्तोऽपि स्फटिकादिजडोपमः ॥'

इति । न च वाच्यं कथं तथापि तद्विकल्परूपं न स्यात् इति न विकल्पतुल्यत्वं—भेदानुल्लासादिति । तथा चोक्तं

'अहंप्रत्यवमर्शो यः प्रकाशात्मापि वाग्वपुः ।
नासौ विकल्पः स ह्युक्तो द्वयाक्षेपी विनिश्चयः ॥'

इति ।

---

पं० ३ ख० पु० सामयिकतया परामर्शेति पाठः ।

पं० ४ क० ग० पु० विकल्पत्वमिति पाठः ।

पं० ५ क० पु० सारतालभ्येति, ख० पु० तया लब्धेति च पाठः ।

संकेतादिस्मरणोपायत्वात्, संकेतादिस्मरणं च तथा अनुभवं विना कुतः, संविदश्च प्राङ्न्यायेन कालादिपरिच्छेदाभावः, इति एकैव सा पारमेश्वरी प्रतिभा अस्मदुक्तिमाहात्म्यकल्पिता एवंविधा अपरिच्छिन्नस्वभावापि सर्वात्मैव, मध्येऽपि वर्तमानभूतभविष्यद्रूपविकल्पान्तरप्रसवभूरेव, तथा च विवेककुशलैरालयविज्ञानमेव-

१ तथा चेति, इत्थं तन्मतं — यदि हि ज्ञानादर्थः पृथगवभासितात्मा भवेत् ज्ञानमन्तरेणापि असावुपलभ्येत? न चैवमस्ति, तस्मादभेद एव ज्ञानार्थयोरिति। यदाहुः

'सहोपलम्भनियमादभेदो नीलतद्धियोः।'

इति। तस्माज्ज्ञानमेव सर्वत्र तथा तथा प्रतिभाति न तद्व्यतिरिक्तो नाम कश्चिदिति, ज्ञान एव च एकत्रायं प्रमेयप्रमाणप्रमितिव्यवहारः समाप्यते, इति, तस्य हि विषयाकारता प्रमेयं, ग्राहकाकारणता प्रमाणं, स्वसंवित्तिश्च फलमिति। यथोक्तं

'यदाभासं प्रमेयं तत्प्रमाणं फलते पुनः।
ग्राहकाकारसंवित्त्योस्त्रयं नातः पृथक्कृतम्॥'

इति। तदिदमनाद्यविद्यावासनाविलासविपर्यासिततत्त्वदर्शनतया ज्ञानमेव ग्राह्यग्राहकसंवित्तिभेदवदिव लक्ष्यते, अविद्याविरतौ तु स्वच्छमेवैतत् संपद्यते न किंचिद्वेति। तदुक्तं

पं० ४ ख० पु० पारमेश्वर्येति पाठः।

पं० ५ ख० पु० एवंविधपरीति पाठः।

मेवोपगतं ससंवादत्वं च तदनन्तरभाविनां विकल्पानां दर्शितमेव—इति नासिद्धो हेतुः साध्यधर्मिणि, न च एकावभासिविकल्पसंविभागकारिणि अविकल्पके विपक्षे सदा वा कदाचिदपि वा वर्तते, न च ततोऽस्य व्यावृत्तिः संदिग्धा—इति न विरुद्धो नानैकान्तिको न

---

'नान्योऽनुभावो बुद्ध्यास्तु तस्यानानुभवः परः।
ग्राह्यग्राहकवैधुर्यात्स्वयं सैव प्रकाशते ॥'

इति। तथा

'अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः।
ग्राह्यग्रहकसंवित्तिभेदवानिव लक्ष्यते ॥
इत्यर्थरूपरहितं संविन्मात्रं किलेदमिति पश्यत्।
परिहृत्य दुःखसन्ततिमभयं निर्वाणमाप्नोति ॥'

इति सौगतमतम्।

१ यत् वेद्यते येन वेदनेन तत् ततो न भिद्यते, यथा—आत्मा ज्ञानस्य, वेद्यन्ते नीलादयः, भेदे हि ज्ञानेनास्य वेद्यत्वं न स्यात्—तादात्म्यस्य नियमहेतोरभावात्, अन्येनान्यस्य असंबद्धस्य वेद्यत्वेऽतिप्रसंग इति भेदे नियमहेतोः संबन्धस्य व्यापकस्यानुपलब्ध्या भेदाद्विपक्षाद्व्यावर्तमानं वेद्यत्वमभेदेन व्याप्यते इति। यच्चायं ग्राह्यग्राहकसंवित्तीनां पृथगवभासः स एकस्मिंश्चन्द्रमसि द्वित्वावभास इव भ्रमः। यथोक्तं

'भेदश्चाभ्रान्तिविज्ञाने दृश्येतेन्दाविव द्वयः।'

इति।

संदिग्धविपक्षव्यावृत्तिः[1], दृष्टान्तधर्मिणि अपि चित्रज्ञानादौ हेतोरेवमेवासिद्धतादिदोषाः परिहृता भवन्त्येव, हेतुदोषेषु तु परिहृतेषु दृष्टान्तादिदोषा निरवकाशा एव, इत्यादि बहु निर्णीतकल्पमपरैरेव, इति किं तदनुभाषणक्लेशेन। सिद्धं तावत् ह्येतत्

यत्प्रातिभं निखिलवैषयिकावबोध-
पूर्वापरान्तरचरं निखिलात्मकं तत्।
तस्यां प्रलीनवपुषः परशक्तिभासि
ग्लानिर्घटेत[2] किमभाव[3]वशोपक्लृप्ता॥

१ यथा छिदिक्रिया छेद्येन संबध्यते भिद्यते च तथा ज्ञानक्रियापि ज्ञेयेन सह संभत्स्यते भेत्स्यते च – इति सहोपलम्भनियमस्यापि विपक्षाद्व्यावृत्तिः संदिग्धेति पूर्वपक्षः। अत्र – ज्ञानस्वपरसंवेद्यतामात्रेणैव नीलतद्धियोर्युगपद्ग्रहणनियमस्योपपत्तेः बाह्याभावाज्ज्ञानं परस्य संवेदकं न भवति इत्युत्तरपक्षः।

२ घटेत – विश्लेषमाप्नुयात्।

३ अभावेति – यथान्यैरुक्तम्

'अभावं भावयेत्तावद्यावत्तन्मयतां व्रजेत्।'

इति।

शरीरप्राणादौ परधनसुखास्वादपटल-
मनालोक्य स्वस्मिन्स्पृशति हृदये ग्लानिमसमाम् ।
प्रविष्टा चेदन्तर्निखिलजगतीसूतिसरसा
परा देवी हन्त प्रविलसतु पूर्णे हविरिव ॥

तदुक्तं स्पन्दे

'ग्लानिर्विलुण्ठिका देहे तस्याश्चाज्ञानतः सृतिः ।
तदुन्मेषविलुप्तं चेत्कुतः सा स्यादहेतुका ॥'

इति ।

'एकचिन्ताप्रसक्तस्य यतः स्यादपरोदयः ।
उन्मेषः स तु विज्ञेयः स्वयं तमुपलक्षयेत् ॥'

इति च ।

मायीयकार्ममलमूलमुशन्ति तावद्
अज्ञाननाममलमाणवमेव भद्राः ।
बीजं तदेव भवजीर्णतरोः परस्मिन्
संविन्निशातदहने दहते क्षणेन ॥

यथाहुः

'मलमज्ञानमिच्छन्ति संसाराङ्कुरकारणम् ।'

इति । तदेवोक्तम्

'तदुन्मेषविलुप्तं चेत्······ ।'

इति । एवमेव च व्याख्यातम्, अतोऽन्यथा ग्लानेः विलोपकत्वमस्याश्च अज्ञानात् सरणम्, अज्ञानस्य च उन्मेषेण विलोपः—इति किं केन संश्लिष्टम्, इति नृपनिरूपणप्रायमेव भवेत्

सइपरिउण्णपमरूउत्ताण
उतहुगहिअबुणभज्जिआणिज्जइ ।
अजाणिअविहडइअञ्ञाण
उजम्पुसुअच्छइपूरिअकज्ज ॥

तदेवं भगवती परावाग्भूमिः गर्भीकृत स्वस्वातन्त्र्यसत्तोद्भविष्यत्पश्यन्त्यादिविनिविष्टपरापराभट्टारिकादिप्रसरात् तद्गर्भीकारवशाविवादघटितसकलभूतभुवनभावादिप्रपञ्चप्रबोधैक्यचमत्कारसारा परमेश्वरभैरवभट्टारकाविर्भावप्रथिततथाविधाद्भुतभूतपरमार्थस्वरूपा स्वात्मविमल-

---

पं० २ ख० पु० व्याख्यातमदः इति पाठः ।

पं० १० क० ख० पु० भूमिगर्भीकृतत्वात् स्वातन्त्र्येति, ग० पु० कृतत-त्स्वातन्त्र्योद्भविष्यदिति च पाठः ।

पं० ११ ख० पु० पशन्त्याद्युद्दिष्टपरेति पाठः, क० पु० परापरादि इति पाठः।

दर्पणनिर्भासितानन्तसृष्टिस्थितिसंहारैक्यमय-महासृष्टिशक्तिरादि-क्षान्तरूपा 'अथाद्या' इत्यादिना ग्रन्थेन निःशेषं भगवता निर्णीयते, इति स्थितम्। तदेवं[1] स्थिते ग्रन्थार्थो निर्णीयते—अकारादि-विसर्गान्तं शिवतत्त्वं, कादि-ङान्तं धरादि-नभोऽन्तं भूतपञ्चकं, चादि-ञान्तं गन्धादि-शब्दान्तं तन्मात्रपञ्चकं, टादि-णान्तं पादादि-वागन्तं कर्माक्षपञ्चकं, तादि-नान्तं घ्राणादिश्रोत्रान्तं बुद्धिकरणपञ्चकं, पादि-मान्तं मनोऽहंकार-बुद्धि-प्रकृति-पुरुषाख्यं पञ्चकं, वाय्वादिशब्दवाच्या यादयो वकारान्ता राग-विद्या-कलामायाख्यानि तत्त्वानि, धारयन्ति—पृथग्भूततया अभिमानयन्ति इति धारणानि, द्वौ अत्र णिचौ प्रयोज्यप्रयोजकभावद्वैरूप्यात्, तथा हि—ध्रियन्ते[2] स्वात्मनि एव सर्वे भावाः प्रकाशात्मनि परमपरिपूर्णे पदे भैरवात्मनि

१ तत्रैव सर्वमस्तीति स्थिते।

२ ध्रियन्ते—अवस्थितिं भजन्त इत्यर्थः।

सर्वात्मनि, यथोक्तं शिवदृष्टौ

'आत्मैव[1] सर्वभावेषु स्फुरन्निर्वृतचिद्वपुः[2] ।
अनिरुद्धेच्छाप्रसरः प्रसरद्दृक्क्रियः शिवः ॥'

इति । यथोक्तं स्पन्दे

'यत्र स्थितमिदं सर्वं....... ।'

इति । एवं स्वात्मन्येव प्रभास्वरे प्रकाशनेन ध्रियमाणान् भावान् धारयति स्वयमप्रकाशीभावेन — जडतास्वभावेदंभावास्पदताप्रापणेन[3] प्रकाशयति परमेश्वर एव, पुनरपि अहंभावेनैव आच्छादयति । तदियं भगवत्सदाशिवेशदशा शुद्धविद्यामयी एकेन णिचा ध्वनिता, तत्रापि च यत् इदन्ताया अहन्तया आच्छादनं तदाच्छा-

---

१ आत्मा — स्वस्वभावः ।

२ चिद्वपुरिति आत्मसात्कृतसमस्तवेद्यार्थः ।

३ स्वभावेदंभावेति — यदुक्तं प्रत्यभिज्ञायाम्

'इदंभावोपपन्नानां वेद्यभूमिमुपेयुषाम् ।
भावानां बोधसारत्वाद्यथावस्त्ववलोकनात् ॥'

इति ।

दनीयेदन्तोपपत्तौ उपपद्यते[1], न च शुद्धपरमेश्वरचिन्मयरूपापेक्षं भिन्नप्रथात्मकमिदन्ताख्यं रूपमुपपद्यते – इति आच्छादनीयानुपपत्तौ तद्वशेन तदाच्छादकतापि अहंभावस्य नोपपन्ना, इति तथाविधेश्वरबोधानुपपत्तिः, तदनुपपत्तौ च न किंचित् भासेत – कारणाभावात्, इत्युक्तमसकृत्, भासते च इदं तद्भासाव्यतिरेकरहितमपि परमेश्वरशक्तित एव बहिः प्रथते – कारणान्तरासंभवात्, स्वसंविदि च संविद एव सर्वमयत्वप्रथनात् । तदेवं स्वात्मरूपं जगत् भेदेन भासमानं प्रकाशात्मन्येव अहमात्मनि भासते सामानाधिकरण्येन, इति इयता एतावत् अवश्यमेवाक्षिप्तं – यथा ईश्वर एव कस्यापि वेदितुर्भिन्नान् वेद्यान् अहन्तया पश्यति, यश्चासौ कोऽपि वेदयिता सोऽपि भासनात् स्वात्ममय एव – इति स्वात्मनि तथाविधाः शक्तीरधिशेते

१ विद्येश्वरादिरूपायामिदन्तायां सत्यामुपपद्यते नान्यथेति ।

पं० १६ ख० पु० एव तावदिति पाठः ।

याभिरसौ तदैव भिन्नवेद्यवेदकीभावमुपात, रागादिभिरेव च तथाविधत्वमस्येति रागादय एव आध्रियमानान् भावान् उक्तन्यायेन धारयन्तमीश्वरं प्रति प्रयोजकतां गच्छन्ति, अतस्तस्यैव पुंस्त्वव्यपदेशकारणैकभूता द्वितीये णिचि उत्पन्ने धारणशब्दवाच्याः, णिजुत्पत्तावपि सर्वत्रैव प्रकृत्यर्थान्वयानपायो ध्रियमाणतया प्रकाशमानस्यैव हि धार्यमाणता प्रकाशनासंज्ञा उपपद्यते यतः, यथोक्तं मयैव शिवदृष्ट्यालोचने

'प्रेषोऽपि स भवेद्यस्य शक्तता नाम विद्यते।'

इति। भर्तृहरिरपि

'अप्रवृत्तस्य हि प्रैषे प्रच्छादेर्लोड्विधीयते।
प्रवृत्तस्य यदा प्रैषस्तदा स विषयो णिचः॥'

इति। तदेवं धारणशब्देनापरशास्त्रेषु कञ्चुक-

---

पं० २ ख० पु० एव यत् तथात्वमप्येति इति पाठः।

पं० ११ ख० पु० प्रेर्योपि इति पाठः।

नामधेयप्रसिद्धान्येव तत्त्वानि इह निरूपितानि, यदुक्तं श्रीतन्त्रसारे

'धारयन्ति पशोः पाशान्भावान्स्वात्ममयांस्तथा ।
विद्यामायानियत्याद्याः शोध्यास्तेन प्रयत्नतः ॥'

इति । यत्तु श्रीसोमानन्दपादैः धारणशब्देन अङ्गानि निरूपितानि पक्षान्तरा[1]श्रयणेन, तत्र परपक्षसर्वद्दश्यत्वप्रथनमात्मनि अभिप्रायः, तेषां हि ईद्दशी शै[2]ली

'स्वपक्षान्परपक्षांश्च निःशेषेण न वेद यः ।
स्वयं स संशयाम्भोधौ निमज्जंस्तारयेत्कथम् ॥'

इति । शादि-क्षान्तं महामाया विद्येश्वरसदाशिवशक्त्याख्यं तत्त्वपञ्चकं, तथाहि—मायातत्त्वस्य उपरि विद्यातत्त्वाधश्च अवश्यं तत्त्वान्तरेण भवितव्यम्—यत्र वि[3]ज्ञानाकलानां स्थितिः, यथोक्तम्

१ अन्यार्थकथनेनेत्यर्थः ।

२ शीले भवा शैली समाधानपूर्विका प्रवृत्तिरिति कय्यटः, रचनेत्यन्ये, शैली स्वमतमित्यन्ये ।

३ इत्थमत्रेश्वरप्रत्यभिज्ञोक्तः क्रमः

पं० १३ क० पु० अवश्यमिति पदं नास्ति ।

'मायोर्ध्वे शुद्धविद्याधः सन्ति विज्ञानकेवलाः ॥'

इति । तथाहि महामायाभावे मायापदे प्रलयकेवलानामवस्थितिः, विद्यापदे च विद्येश्वरादीनाम् — इति किमिव तत् विज्ञानकेवलास्पदं स्यात्, अत एव विद्यापदप्रच्युतानामपि एषां भेदमयभावराशिगतभिन्नवेद्यप्रथानुदयात् मायीयाभिधानमलानुल्लासे, तत्र विज्ञानकेवलो मलैकयुक्त इति अज्ञानात्मकाणवमलावलम्बित्वं श्रीपूर्वशास्त्रे कथितम्, त एव शुद्धविद्यापदा-

---

'स्वातन्त्र्यहानिर्बोधस्य स्वातन्त्र्यस्याप्यबोधता ।
द्विधाणवं मलमिदं स्वस्वरूपापहानितः ॥
शुद्धबोधात्मकत्वेऽपि येषां नोत्तमकर्तृता ।
निर्मिताः स्वात्मनो भिन्ना भर्त्रा ते कर्तृतात्ययात् ॥'

एते च विज्ञानकेवलाः

'शून्याद्यबोधरूपास्तु कर्तारः प्रलयाकलाः'

इति ।

---

पं० ३ ख० पु० केवलिनामिति पाठः ।

पं० ६ ख० पु० गताभिन्नेति पाठः ।

पं० ९ क० पु० लक्षितं तत एवेति पाठः ।

नुग्रहात् बोधिता मंत्रतदीशादिभावभागिनो भवन्ति, इति तत्रैवोक्तं

'विज्ञानकेवलानष्टौ बोधयामास पुद्गलान् ।'

इत्यादिना,

'मन्त्रमहेश्वरेशत्वे संनियोज्य.................. ।'

इत्यादिना च। केषुचित्तु शास्त्रेषु सा महामाया भेदमलाभावोपचारात् विद्यातत्त्वशेषतयैव निर्णीयते, क्वचित् पुनरज्ञानमलसद्भावोपरोधात् मायातत्त्वपुच्छतया, यथा केषुचित् शास्त्रेषु 'रागतत्त्वं पुंस्येव लग्नम्' इति न पृथक् परामृष्टम्, यथा वा इहैव श्रीत्रिकागमेषु नियतिकालौ न पृथक् निरूपितौ, अत्र मते विद्याद्यनाश्रितशिवान्तं ब्रह्मपञ्चकं, निर्णेष्यते च एतत्, एषां च तत्त्वानां बृहत्त्वं बृंहकत्वं च प्रायो भेदसमुत्तीर्णत्वात् संसारसूतिकर्तृत्वात् च, एवमेतानि

१ उक्तं हि अन्यत्र

'मन्त्रत्वमेति संबोधादनन्तेशेन कल्पितात् ।'

इति ।

पं० १४ ख० पु० भेदोत्तीर्णत्वादिति पाठः ।

चतुस्त्रिंशत्तत्त्वानि प्रक्रियात्मना स्थितानि अकारमेव आदिरूपतया भजन्ते। तत्र इदं विचार्यते—प्रथमतः शिवतत्त्वम् 'अ' वर्गे, ततो भूतानि इत्यादि यावदन्ते शक्तितत्त्वम्—इति कोऽयं सृष्टिसंहारज्ञतिस्थित्यवतारक्रमाणां मध्यात् क्रमः, सर्वत्र च श्रीमालिनीविजयोत्तर-सिद्धातन्त्र-स्वच्छन्दादिशास्त्रेषु क्षंकारात्[1] प्रभृति

१ क्षकारात् प्रभृतीति, इत्थमत्र क्रमः—पृथिव्यां क्षकारमेकमेव पद-मन्त्रवर्णरूपं, अबाद्यव्यक्तान्तेषु तत्त्वेषु हादि-टान्तास्त्रयोविंशतिवर्णाः, चतुरक्षरे द्वे पदमन्त्रे, पञ्चाक्षराणि त्रीणि पुमादिमायान्तेषु घादि-आन्ताः सप्त वर्णाः, पदमन्त्रे द्वे, पञ्चाक्षरमेकं द्व्यक्षरं द्वितीयमिति, शुद्धविद्येश्वर-सदाशिवेषु च ग-ख-का वर्णास्त्रयः, पदं मन्त्रं च त्र्यक्षरमेव, शिवतत्त्वे पुनः स्वरषोडशात्मकमेकमेव वर्णपदमन्त्रतत्त्वमिति, तच्च शक्तित्वप्राधान्यादेकमेव, शक्तिर्हि न शक्तिमतो भिन्ना भवितुमर्हतीति भावः। क्षित्यादितत्त्वचतुस्त्रिंशतः क्षकारात्प्रभृति चैकमेकं योजयित्वा पूर्वं व्यापकतयाभिमते सशक्तिके षट्त्रिंशे तत्त्वे संहारक्रमस्य अध्वशुद्धावुचितत्वात् विसर्गादारभ्य आनुलोम्येन अकारपर्यन्तस्वरषोडशकत्वम्। उक्तं चान्यत्र

'तत एकैकवर्णत्वं तत्त्वे तत्त्वे क्षमादितः।
कृत्वा शैवे परे प्रोक्तः षोडशार्णो विसर्गतः॥'

इति।

पं० २ क० पु० आधारिकतया भजन्ते इति पाठः।
पं० ४ ख० पु० अन्तम् इति पाठः।
पं० ७ ख० पु० सिद्धान्तस्य स्वच्छन्देति पाठः।

अवर्गान्तं पार्थिवादीनां शिवान्तानां तत्त्वानां निवेशः उक्तः

'आद्यधारिकया व्याप्तं तत्रैकं तत्त्वमिष्यते ।
एकमेकं पृथक् क्षार्णे पदार्णमनुषु स्मरेत् ॥'

इत्यादिना, तत्रैव च पुनर्भिन्नयोनिमालिनीभट्टारिकानुसारेण फकारादीनामभिन्नयोनिमातृकानिवेशावाप्ततत्त्वान्तरस्थितीनामपि

१ धारिकेति,

'मतं चैतन्महेशस्य श्रीपूर्वे यदभाषत ।
धारिकाप्यायिनी बोद्ध्री पवित्री चावकाशदा ॥'

इति ।

२ मालिनीति । यदुक्तं श्रीमज्जयद्रथराजानकैः

'............ भिन्नयोनिस्तु मालिनी ।'

इत्यस्या व्याख्यानावसरे, भिन्ना स्वरैर्भेदिता योनिः कादिलक्षणा यस्याः । तत्र शक्तिवाचको मालिनीमन्त्रः, शक्तिमद्वाचकस्तु मातृकामन्त्रः । तत्र मातृका प्रसिद्धैव । मालिनी यथा 'न ऋ ॠ ऌ ॡ थ च ध ई ण उ ऊ ब क ख ग घ ङ इ अ व भ य ड ढ ठ झ ञ ज र ट प छ ल आ स अः ह ष क्ष म श अं त ए ऐ ओ औ द फ' इति । त्रिकहृदयेऽपि

पं० ३ क० पु० आधारिकतया व्याप्तमिति पाठः ।

पं० ४ ख० पु० पृथक् वर्णे इति पाठः ।

प० ४ क० पु० यदार्णं मनुषु इति पाठः ।

'फे धरातत्त्वमुद्दिष्टं चादि-आन्तेऽनुपूर्वशः ।
त्रयोविंशत्यबादीनि .................. ।'

इत्यादिना पार्थिवादितत्त्वयोजना निरूपिता । पुनरपि च तत्रैव श्रीविद्यात्रयानुसारेण[1]

'नादिनी तु शिखाग्रस्था नकाराक्षरसंज्ञिता ।'

इति । तदुक्तं 'मालिनी हि भगवती मुख्यं शाक्तं रूपं बीजयोनिसंघट्टेन समस्तकामदुघम्, अन्वर्थं चैतन्नाम रुद्रशक्तिमालाभियुक्ता फलेषु पुष्पिता संसारशिशिरसंहारनादभ्रमरी सिद्धिमोक्षधारिणी दानादानशक्तियुक्ता इति रलयोरेकत्वस्मृतेः, अत एव भ्रष्टविधिरपि मन्त्र एतन्न्यासात्पूर्णो भवति साञ्जनोऽपि गारुडवैष्णवादिर्निरञ्जनतामेत्य मोक्षप्रदो भवतीति ।

१ विद्यात्रयेति,

'या सा शक्तिर्जगद्धातुः कथिता समवायिनी ।
इच्छात्वं तस्य सा देवि सिसृक्षोः प्रतिपद्यते ॥'

इति प्रथमोच्छलत्तात्मकत्वेन बहिरुल्लिलसिषास्वभावा प्रमातृविश्रान्ति-धामभूता परा इत्युक्ता, ततोऽपि

'एवमेतदिदं वस्तु नान्यथेति सुनिश्चितम् ।
ज्ञापयन्ती जगत्यत्र ज्ञानशक्तिर्निगद्यते ॥'

इत्यन्तरासूत्रितेच्छाक्रियामयी

'यत्र यत्र मिलिता मरीचय-
स्तत्र तत्र विभुरेव जृम्भते ।'

इत्येवंरूपा परापरेत्युक्ता । ततोऽपि

'एवंभूतमिदं वस्तु भवत्विति यदा पुनः ।
जाता तदैव तद्वस्तु कुर्वन्त्यत्र क्रियोच्यते ॥'

इति तत्तत्प्रमातृप्रमेयादिवैचित्र्यमयी च अपरेत्युक्ता ।

'निष्कले पदमेकार्णं त्र्यर्णैकार्णद्वयं द्वये ।'

इति परापराभट्टारिकानुसारेण, ओंकारं शिवतत्त्वम् अघोरे इत्यत्र शक्तितत्त्वम् इत्यादिक्रमेण पार्थिवादितत्त्वनिरूपणा योजिता । पुनरपि च तत्रैव श्री-विद्यातत्त्वानुसारेण फकारादीनामभिन्नयोनिमातृकानिवेशावाप्ततत्त्वान्तरस्थिती-

---

यथोक्तमाचार्याभिनवगुप्तपादैः

'यथेदं शिवादिधरण्यन्तमविकल्पसंविन्मात्ररूपतया बिभर्ति च पश्यति च भासयति च परमेश्वरः सास्य पराशक्तिः, यथा दर्पणहस्त्यादिवत् भेदाभेदाभ्यां सा परापरा शक्तिः, यथा परस्परविविक्ततात्मना भेदेनैव सा अपरा शक्तिः ।'

इति विद्यात्रयनिरूपणं पारमेश्वरशास्त्रेषु'

१ श्रीमन्मालिनीविजये

'मायां तु मार्गसंशुद्धौ दीक्षाकर्मणि सर्वतः ।
क्रियास्वनुक्तमन्त्रासु योजयेदपरां बुधः ॥
विद्यादिसकलान्तं च तद्वदेव परापराम् ।
योजयेन्नेश्वरादूर्ध्वं नियत्यादिकमष्टकम् ॥
न चापि सकलादूर्ध्वमङ्गषट्कं विचक्षणः ।
निष्कले परया कार्यं यत्किंचिद्विधिचोदितम् ॥'

इति । अत्र सूक्ष्मतरबोधवतां मूलार्थः सुबोध एवेति न निर्णीतः, अन्येषां तु युक्तिकथनमपि पिष्टपेषणतुल्यमकिंचित्करमित्यर्थः ।

---

पं० २ ख०पु० ऊकारमिति पाठः ।

नामपि

'फे धरातत्त्वमुद्दिष्टं चादि-आन्तेऽनुपूर्वशः ।
त्रयोविंशत्यबादीनि ……………………॥'

इत्यादिना तत्त्वयोजना । श्रीमदपराभट्टारिकाभिप्रायेण च

'सार्धेनाण्डद्वयं व्याप्तमेकैकेन पृथग्द्वयम् ।
अपरायाः समाख्याता व्याप्तिरेषा विलोमतः ॥'

इत्यादिना फट्कारे पार्थिवप्राकृताण्डद्वयम्, हुँकारे मायीयं, ह्रींकारे शाक्तमण्डं च इति तत्त्वनिवेशः । श्रीपराभट्टारिकाव्याप्तिनिरूपणे च

'सार्णेन त्रितयं व्याप्तं त्रिशूलेन चतुर्थकम् ।
सर्वातीतं विसर्गेण परा व्याप्तिरुदाहृता ॥'

---

१ अत्र पिण्डार्थः, — इच्छाशक्ति-ज्ञानशक्ति क्रियाशक्तित्रितयं वैपरीत्येन बोद्धव्यमित्यर्थः ।

२ एतत्कथने पुनरयमभिप्रायः

'एकेन वपुषा शुद्धौ तत्रैवान्यप्रकारताम् ।
अन्तर्भाव्याचरेच्छुद्धिमनुसन्धानवान् गुरुः॥'

अशक्तौ क्रमान्तरोऽप्यस्तीत्याह

'अनन्तर्भावशक्तौ तु सूक्ष्मे सूक्ष्मं विशोधितम् ।
तद्धि शुद्धं बीजभावात्सूते नोत्तरसन्ततिम् ॥'

इति । एतच्च सर्वं त्रिकसारे प्रसिद्धम् ।

---

पं० ५ क० पु० सार्धेनातो द्वयमिति पाठः ।

पं० ८ क० पु० पार्थिवप्राकृतौ ततो द्वयमिति, ग० पु० प्राकृताण्डतो द्वयम् इति पाठः ।

पं० ९ क० पु० शाक्तमन्त्रमिति पाठः ।

इति अन्यथैव प्रक्रियायोजनं निरूपितम् । पुनरपि मातृकासद्भावरतिशेखरकुलेश्वरादिमन्त्रभट्टारकाद्यभिप्रायेण अन्यथा अन्यथा च, अपरतन्त्रेष्वपि एवमेव विपर्यस्तप्रायं बहु बहुशो निरूपितम्, तत् पुनरिह सर्वमेवान्यथा इति परिदृश्यते—इति महान् अयमागमविदः स्वकटकक्षोभ इव सर्वविनाशकः समुद्भूतः । न च सांकेतिकमिदं—येन पुरुषेच्छावशोपकल्पितेन रूपेण च अन्यथा अन्यथा निरूप्यमाणमिह संगतं भवेत्, यथा—दाक्षिणात्याः चौरशब्देन ओदनं व्यपदिशन्ति, सैन्धवास्तु तेनैव दस्युम्, ओदनं तु कूरश्रुत्या, तया तु काश्मीरिका वितुषितयवगोधूमतण्डुलान्, इति—सांकेतिकत्वे हि अनवस्थितत्वात् अपारमार्थिकत्वात् च शोध्यशोधकभावाद्यनुपयोगात् अनिरूपणीयत्वमेव स्यात्, संकेतस्यापि परमार्थसत्त्वैव, नहि संकेतो नाम अन्यः कश्चित्—ऋते परमेश्वरेच्छातः, प्रसिद्धो हि न संकेतो भगवदि-

च्छाप्रकल्पितः — तन्नामाक्षरलिप्यादिगताप्यायनादिकर्मविधिजनिततच्छान्तिकादिफलसंपत्तेः, इति चेत् — तर्हि एकेनैव संकेतेन सर्ववस्तुसंपत्तौ किं संकेतान्तराश्रयेण तदाश्रयणे वा स्वशास्त्रितशास्त्रान्तरीयलौकिकपार्षददैशिकघनकृतप्रतिपुरुषनियताद्यनन्तसंकेतनिवेशनपूर्वकं, तदपि निरूप्यमेव, न तावद्भिरुपयोगः, एतावतैव कार्यसिद्धिः — इत्यपि निरक्षरकुक्षिकुहरैः उच्यमानं श्रूयमाणं च शोभत एव। अविकला भगवदिच्छा न विचारपदवीमधिशेते? इति चेत् — अलं ग्रन्थधारणवाचनव्याख्यानविचारणादिमिथ्यायासेन, परित्याज्य एवायं गुरुभारः, तूष्णींभावशरणैरेव स्थेयम्, भगवदिच्छैवोत्तारणीयमुत्तारयेत्, तदिच्छैव अनुग्रहात्मा एवं विचारणायां पर्यवसाययति, न

पं० ४ ख० पु० संकेतान्तरेण इति पाठः ।

पं० ७ ख० पु० अपि निरूप्यमिति पाठः ।

पं० १० क० पु० पदवीमश्नुते इति पाठः ।

खलु पादप्रसारिकयैव सुखं शयानैः भुञ्जानैश्च स्वयम् अविमृशद्भिः स्वापेक्षतीव्रतरादिपरमेश्वरानुग्रहोत्पन्नाधिकाधिकसूक्ष्मतमविमर्शकुशलधिषणापरिशीलनपराङ्मुखैः वा स्थातव्यमिति। तत् सर्वदा विमृश्यमिदं वर्तते—इति एतावत् न जहीमः, तत् अत्र अवधार्य स्थीयतां यावत् परिहरामः सर्वमिदं किंचित् न वस्तुतः चोद्यजातं परमेश्वर्यां परावाग्भुवि अनुत्तरदुर्घटकारितात्मकनिरपेक्षस्वातन्त्र्यसारायां पारतन्त्र्यांशलेशमात्रपरमाणुनापि अनुपरक्तायाम्—इति प्रायः प्रागेव प्रतिसमाहितमदः, तथापि विस्तरतः परिह्रियते,—यत् तावदुक्तं शिवतत्त्वं, ततः पृथिवी इत्यादिकोऽयं क्रमः इति, तन्न कश्चित् क्रमः—इति ब्रूमः, अक्रमं यत् एतत् परं पारमेश्वरं विचित्रं गर्भीकृतानन्तवैचित्र्यं स्वातन्त्र्यं त्रिकार्थरूपं तदेव एतत्, तथाहि—येयमपरा परापरा पराभट्टारिका पारमेश्वरी भैरवीया सत्ता सा सदाशिवतत्त्वानाश्रितशक्तितत्त्वस्यापि उप-

विवृत्तिः — तदन्तस्यापि आसनपक्षीकृतत्वात्[1] । तथाहि

' ईश्वरं च महाप्रेतं प्रहसन्तमचेतनम् । '

इत्यनेन सदाशिवान्तमासनं नादान्तपक्षनिविष्टं श्रीपूर्वशास्त्रोपसंहृतम्,

' इत्येतत्सर्वमासनम् '

इत्युक्त्वा

---

१ दिव्यतनुसंजीवनार्थं ह्ययं क्रमः, यथान्यत्र

' महाप्रेतं न्यसेत्पश्चात्प्रहसन्तमचेतनम् ।
रक्तवर्णं सुतेजस्कं नेत्रत्रयविभूषितम् ॥ '

तद्यथा -- आधारशक्तिमूले मूलं, कन्द आसारमूलकम्, लम्बिकान्ते कलातत्त्वान्तो दण्डः, मायात्मको ग्रन्थिः, चतुष्किकात्मा शुद्धविद्यापद्मं, तत्रैव सदाशिवभट्टारकः, स एव महाप्रेतः प्रकर्षेण लीनत्वात् बोधात्प्राधान्येन वेद्यात्मकदेहक्षयान्नादामर्शात्मकत्वाच्चेति, तत्राभ्युत्थितं तन्मूर्धरन्ध्रत्रयनिर्गतं नादान्तवर्तिशक्तिव्यापिनीसमनारूपपरात्रयं द्विषट्कान्तं, तदुपरि शुद्धपद्मत्रयमौन्मनसम्, एतस्मिन् विश्वमये भेदे आसनीकृते अधिष्ठातृतया व्यापकभावेन आधेयभूतां यथाभिमतां देवतां कल्पयित्वा पूजयेदिति ।
अत्रान्तरश्लोकाः

' द्वादशान्तमिदं प्राग्रं त्रिशूलं मूलतः स्फुरत् ।
देवीचक्राग्रगं त्यक्तक्रमः खेचरतां व्रजेत् ॥
मूलाधाराद्विषट्कान्तव्योमाग्रापूरणात्मिका ।
खेचरीयं खसंचारस्थितिभ्यां खामृताशनात् ॥ '

इति । इत्यन्तर्यागः ।

'तस्य नाभ्युत्थितं शाक्तिशूलशृङ्गत्रयं स्मरेत्'

इति शक्तिप्रख्यव्यापिनीसमनात्मकशृङ्गत्रयमुक्तं, तत्रापि उन्मनसोर्ध्वकुण्डलिकापदपरमधामसितकमलत्रयरूपतया निरूपितम्, इत्येतत् परमासनं — परापर्यन्तत्वात् इति, तदुपरि च देवीनां स्थितिः इति, तदेतत्परं पश्यन्त्याख्यं ज्ञानशक्तेरेव पर्यन्तधाम नादाख्यरूपमतिक्रमणीयत्वेनैव स्थितं, यथोक्तं शिवदृष्टौ

'अथास्माकं ज्ञानशक्तिर्या सदाशिवरूपता ।
वैयाकरणसाधूनां सा पश्यन्ती परा स्थितिः ॥'

इति ।

'प्रत्यगात्मनि हि बुद्धिः पश्यन्ती रुद्रदेवता ।'

परं सदाशिवज्ञानशक्तावेव अनाश्रितशिवशक्त्यात्मनि विश्राम्यति, मनोऽहंकारयोः ब्रह्मवि-

---

१ ईश्वरप्रत्यभिज्ञायां

'तत्रैतन्मातृतामात्रस्थितौ रुद्रोऽधिदैवतम् ।
भिन्नप्रमेयप्रसरे ब्रह्मविष्णू उदाहृतौ ॥'

इति । अत्र विवेकेच्छुभिस्तन्त्रालोक एवावधार्यम् ।

---

पं० २ ख० पु० शक्तिमुख्येति, समनान्तेकेति च मूलपाठोऽस्ति ।
पं० ३ ख० पु० औन्मनसेति पाठः ।

ष्णुदेवतयोः वैखरीमध्यमापदे पत्योरीशसदाशिवं[1]क्रियाशक्तिपदमेव परा प्रतिष्ठाभूः, इति तावत् आगमसिद्धं स्वसंवेदनबृंहितं च, तत् पश्यन्त्युपरि पराभूमिः भगवती—यत्र सर्वमभेदेनैव भाति च[2] विमृश्यते च। यद्यपि हि विद्यापदे मायापदेऽपि अभेदेन भासना स्थितापि तत्र विमर्शोऽन्यथा, विद्यापदे हि इदं[3]मिति प्रमातृप्रमेयजातमेकतोऽहं[4]मात्मनि संक्रामेत्, तदाच्छादितं विमृश्यते—'अहमिदम्' इति, तत् एतत् समाने चिदात्मनि अधि[5]करणे उभयं प्रतिबिम्बितमभेदेनैव अवभासमानं सामानाधिकरण्यमुक्तम्, अत एव ईश्वरावं[6]स्थायां परा-

१ ईश्वरतत्त्वस्यैव सदाशिवे।

२ सूक्ष्मबुद्धिविवेच्योऽत्र क्रमः।

३ ईश्वरभट्टारके।

४ सदाशिवभट्टारके।

५ ज्ञानशक्तिशिवे।

६ ज्ञानरूपशिवावस्थायाम्।

पं० ६ क० पु० भानमास्थितापीति, ग० पु० भानमस्ति तथापीति पाठः।

परात्मिकां दशां भावा भजन्ते, यथैव माया[1]-ध्वनि अपरां, न तु सैव परापराशक्तिः अपरा वेति यत्[2] ईश्वरतत्त्वं प्रति अभिहितं[3] श्रीमदुत्पलदेवपादैः[4] तत् प्रदर्शितागमविपर्यासशङ्कायु-

---

१ शुद्धविद्यारूपं महामायां च त्यक्त्वा, सैव – ईश्वरावस्थैव ।

२ परत्वसंभवे कारणमाह यदिति यस्मादीश्वरतत्त्वे परापरत्वं तत्र दर्शितं तेनायातमीश्वरावस्थायां परत्वम् ।

३ अभिहितमिति – परापररूपत्वेन चेति योज्यम् ।

४ यथोक्तम्

'अत्रापरत्वं भावानामनात्मत्वेन भासनात् ।
परताहन्तयाच्छादात्परापरदशा हि सा ॥ '

इति । परत्वं पूर्णत्वमनन्यापेक्षाहमिति, अपरत्वमपूर्णतान्यापेक्षतेदमिति । तथैव ईश्वरप्रत्यभिज्ञायामपि

'सामान्याधिकरण्यं च सद्विद्याहमिदंधियोः । '

प्रकाशस्य यदात्ममात्रविश्रमणेऽनन्योन्मुखः स्वात्मप्रकाशताविश्रान्तिलक्षणो विमर्शः सोऽहमित्युच्यते, यस्त्वन्योन्मुखः स इदमिति स च स्वप्रकाशनमात्रे पुनरनन्योन्मुखे रूपे विश्राम्यति परमार्थतः । तत्राद्ये विमर्शे शिवतत्त्वं, द्वितीये विद्येश्वरता, मध्यमे तु रूपेऽहमिदमिति समधृततुलापुटन्यायेन यो विमर्शः स सदाशिवनाथे ईश्वरभट्टारके च, इदंभावस्य तु ध्यामलाध्यामलताकृतो विशेषः – ये एते अहमिति इदमिति धियौ तयोर्मायाप्रमातरि पृथगधिकरणत्वम्, अहमिति ग्राहके इदमिति च ग्राह्ये

क्तम् – इति न मन्तव्यम्, मन्त्र[1]महेशादिषु तु रूपं बोधैकपरमार्थमपि अपरबोधैकपरमार्थात् ‘अन्यदहम्’ ‘इदं पुन[2]रिदमेव’ इति संवित्, विज्ञानाकलानां तु बोधैकपरमार्थेनापि रूपेण ‘अहं नेदम्’ इति संवित् अप्रबोधात् ‘अहमित्येव’ तत्र अप्रबुद्धम्, प्रलयकेवलिनाम् ‘इदमहम्’ इत्यप्रबुद्धमेव, [3]अत्र मायापदे च तन्निर्विकल्पकताभासेन यद्यपि अस्ति तथाविध एव प्राणभूतो विमर्शः तथापि तद्रूपव्यव-

तन्निरासेन चैकस्मिन्नेवाधिकरणे यत्संगमनं संबन्धरूपं तत् सती शुद्धा विद्या अशुद्धविद्यातो मायाप्रमातृगताया अन्यैव। तत्र यदाहमित्यस्य यदधिकरणं चिन्मात्ररूपं तत्रैवेदमंशमुल्लासयति तदस्यास्फुटत्वात् सदाशिवता, अहमिदमिति इदमहमिति तु इदमंशे स्फुटीभूतेऽधिकरणे यदाहमंशविमर्शं निषिञ्चति तदेश्वरतेति विभागः।

१ शुद्धविद्यामहामायायां विमर्शस्वरूपमाह उत्पलदेवमहोदयः – मन्त्रेति।

२ पुनरिति उपरिवर्त्यहन्ताया भिन्नमेवेदमंशप्राधान्यं यस्मान्महामायेति संज्ञा परैः कृता, यदुक्तं तत्रैव भेदधीरेवेति।

३ अत्र – प्रलयाकले, मायापदे – सकले च।

पं० ४ ग० पु० बोधैकपरमार्थेपि रूपे नाहं नेदम् इति पाठः।

हारकस्य तत्प्रसादासादितसत्ताकस्यापि तद्-
व्यतिरिक्तस्यापि वा पश्चात्तनस्य विमर्शस्य
'इदं शरीरादि, अहमहं, योऽसौ ज्ञाता, इदं
घटादिकम्, इदं यत्तत् ज्ञेयम् इति भेदेनैव
विमर्शरूपतया व्यवहारो विकल्पात्मैव, तत्र तु
तथाविधत्वे कारणान्तरासंवेदनात्कल्प्यमानेऽपि
च कारणे पुनरपि तथाविधबोधाविनिर्भागमा-
त्रपर्यवसानात् तस्यैव अविकल्पसंविदात्मनः
तथा सामर्थ्यं, तथा सामर्थ्ययोगादेव च तद-
नन्तवैचित्र्यात्मकत्वम्—इति ऐश्वर्यमनपायि
सिद्ध्येत्, अस्यां च सत्तायामैश्वर्यमनपेतं—यतो
वैखर्यात्मनि एवं मायीये वेद्येऽपि वा मध्यमा-
मये धाम्नि भासनातिरेक्यपि संभाव्य एवं वि-
मर्शः। अत्र तु परसंविदि यथैव भासा तथैव
व्यवहारमयोऽपि विमर्शः, तेन—जल इव जलं
ज्वालायामिव ज्वाला सर्वथा अभेदमया एव
भावा भासन्ते, न तु प्रतिबिम्बकल्पेनापि केवलं,
यावत् एषापि परमेश्वरी उपदेशाय निरूप्यते

तावत् अधरसत्ताक्लृप्ता तथा भवति । एवं च भासात्मकं भैरवरूपं स्वतः सिद्धम् अनादि प्रथमं सर्वतः चरमं च सर्वतश्च वर्तमानमिति किमपरं तत्र उच्यताम् । तत्त्वभावविकासात्ममयमात्मैक्येनैव स्वप्रकाशं प्रकाशयति, तथैव च विमृशति अनपेततथाचमत्कारत्वेऽपि, यच्च तत् तथाविमर्शनं तत् भाविमायीयानन्तसृष्टिसंहारलक्षकोट्यर्बुदपरार्धसाक्षात्कारिणि भासने भवेत् तथारूपमेव भवति, तथा भवच्च तत् यदि सृष्टौ प्राथमिकं माध्यमिकं वा पदं भासनात् विमृशेत् तत् पूर्वस्य तदुत्तरव्यभिचारणाशंकासंभावनानपगमात् अपरिपूर्णमप्रथितेतरभावराशिखण्डिताभेदं कथमनिर्व्यूढपरभैरवमहाधामसमाश्रिताधस्तनपश्यन्त्यादिनिष्ठभेदासूत्रणकलङ्कं तथाविधवस्त्वपोषणवशानाममात्री-

१ परिपूर्णम् ।

पं० १ क० पु० क्लिप्त्या इति पाठः ।

पं० १५ क० ग० पु० वस्त्वपोहनेति पाठः ।

भूतपराभट्टारिकारूपं तत् किमपि रूपं भवेत्, एतादृशधारारोहणाभावे च न किंचित् इदं विजृम्भमाणं भासेत विजृम्भेत इति, न व्रजतु अपूर्णता, मा प्रतिष्ठभावराशिरभेदकथा खण्ड्यताम्, मा निर्वाक्षीद्भैरवाश्रयता, भेदकलङ्कमुद्वहतु नामधेयमात्रेण परत्वम्—इति वक्तुं युक्तम्, तत् एतदेव भवति संगच्छते च, यदि प्रथमतरं सर्वचरमे एवमाभासा पतन्ती तत्रैव विमर्शेनापि पदं बन्धयेत्, स हि चरमो भागः तथा तावत् स्वात्मरूपं बिभ्रत् तत्स्वात्मरूपनान्तरीयकतास्वीकृततदनन्तनिजपूर्वपूर्वतरादिभागान्तरो भासमानो विमृश्यमानश्च पूर्ण एव, तत्पूर्वोऽपि भागः तदुत्तरभागपृष्ठपातिवृत्तपूर्वपरिपूर्णभासासारविमर्शतादात्म्यात् तदुत्तररूपपरिपूर्णतामजहत् स्वयं च स्वरूपनान्तरीयकताहठकृष्टस्वपूर्वपूर्वतरादिभागान्तराभोगो भासमानो विमृश्यमानश्च तथैवाखण्डितः—इत्येवं तत्पूर्वपूर्वगताभासा तत्तद्द्वित्रादिनिजनिजो-

त्तरभागभासाविभागे लब्धभैरवभावस्वभावा-
व्यभिचारानुरोधबलस्वीकृतस्वस्वपूर्वभागचम-
त्कार एकैकमपि परं पूर्णा भवति यावत् स्वप्र-
काशनिजभैरवाभिमतनिकटतरवर्ति रूपं, तदेव
स्वेच्छाविश्रान्तिधाम वा भैरवाख्यं वपुः, स्वय-
मेव तद्विमर्शकुशला भवत प्रसंख्यानपराः हृद्-
गिरि-तरुप्रभृत्युपाधिसंकोचेन रहिते तद्वत्यपि
वा अरण्यानीप्रदेशे दूरादखण्डिता दृष्टिरेवमेव
अखण्डितताममुपाश्नुवाना भैरवबोधानुप्रवेशं
प्रति संप्रदायतामासादयेत

'निर्वृक्षागिरिभित्त्यादौ देशे दृष्टिं विनिक्षिपेत् ।'

इत्यादि, अन्यथा भागशः पाते प्रथमभागात्
आरभ्य यदि वा निरवयवमेव एतत् तत्क इव
अपरसंवेदनेभ्योऽपूर्णाभिमतेभ्यो विशेषः, वि-
शेषस्तु गर्भीकृतानन्तवैचित्र्यचमत्कारकृत इव
अपूर्णसंविदन्तरेभ्यः पूर्णाभिमतसंवेदनस्य —
इति स्वयमेव जानन्तु सोपदेशाः पारमेश्वराः।
परमेशशक्तिपातकिरणाविकसिते तु पशुजन-

हृदयकुशेशये न अस्मदीयैर्वचनशतैरपि अतितीक्ष्णाभिधेयसूचिभिरपि संभेदोऽथ विकासोऽथ वितरीतुं शक्यः, घटेऽपि एवमेव परिपूर्णो दृष्टिपातः, तत्रापि हि अविकल्पा संवित् झगिति चरमभागे एव निपतति, ततस्तु क्रमात् विकल्पसंविद आयान्त्य आ चरमनिकटभागात् अन्तस्तरामन्तस्तमां च अनुप्रविशन्ति, इति किमन्येन। तदेवमेव इहापि शिवतत्त्वं सदा अविकल्पमेव विकल्पसूति स्वातन्त्र्यसरसमनादि सर्वादिभूतं सिद्धम् अत्र तावत् न विमतिः तत्तु परिपूर्णं तथा भवति यदि सर्वचरमां पार्थिवीमेव भुवमधिशेते धरासंवित् हि तथा धरां विषयतयापि अभेदेनाभासयेत् विमृशेत् च यदि तत्स्वरूपसर्वस्वावभासविमर्शयोः व्याप्रियेत, स्वरूपसतत्त्वं च अस्याः परिपूर्णप्रसरतत्स्वातन्त्र्यकॢप्ताप्ररूढाभेदतत्पूर्वकैकरसभेदावभासतद्दशोदितसंकुचच्चित्स्वातन्त्र्यसत्तामयमायाग्राहकतद्ग्राह्यचक्राविभेदात्मकप्रधानतद्विकारधीत-

त्त्वतत्परिणामात्मकाहंकारतन्मूलकारणपूर्वकत-
न्मात्रवर्गप्रसूतखादिजलान्तभूतवर्गाधरवृत्तित-
या अवस्थानं धरायाः, सा हि यावदाक्षेपेणैव
वर्तमाना तावत् स्वरूपसतत्त्वैव, यावदेव पञ्च-
गुणत्वात् तन्मात्राणि आक्षिपेत् तावत् तानि
आक्षिप्यमाणानि निजस्वरूपोपक्लृप्तये समा-
क्षिप्तप्राक्तनप्रातिष्ठिकमूलान्तरपरम्परानुबन्धि-
स्वकपूर्वकमूलान्येव, नहि 'उपादानाभिमत-
कारणस्वरूपानन्वयः कार्यसत्तायां स्यात्' इति
न्याय्यम्, निमित्तकारणादीनि कथंचित् न
अन्वीयुरिति उच्येतापि कदाचित्, एतच्च प्रकृत-
विघातकमन्यत्र तदभिधानप्रवणे शास्त्रे निष्कु-
ष्य निष्कुषितमस्माभिरेव – इति न इह वित-
तम्। तदेवं प्रथमं तावत् धरा ततोऽपि जलं
तथैव स्वरूपसाकल्येन भासमानं विमृश्यमानं
च तद्भासा विमर्शचमत्कारमन्तःकृत्य तथाविध-
धरणितत्त्वसंस्कारसत्ताकं पूरयेदेव इति यावत्,
अन्ते सैव पूर्णसंविद्भगवती शिवात्मैव, तत् अ-

नेनैव उपदेशयुक्तिनयेन 'प्रदेशमात्रमपि ब्राह्मणः सर्वरूपम् एकैकत्रापि च तत्त्वे षट्त्रिंशत्तत्त्वमयत्वं' शास्त्रेषु निरूपितम्। एवं च श्रीस्पन्दशास्त्रोपदेशो

'दिदृक्षयेव सर्वार्थान्यदा व्याप्यावतिष्ठते।
तदा किं बहुनोक्तेन स्वयमेवावभोत्स्यते॥'

इत्ययं हृदयंगमीकर्तव्यः, चरमेण पादेन तदेवात्र सूचितमिति किमन्यत्, यच्च येन विना न भवति तत् तावत् स्वरूपं यथा शिंशपात्वं वृक्षस्य स्वरूपं, पारमेशस्वातन्त्र्यतिरोहितानियतिविजृम्भायां यत्तु यावत् स्वरूपं न भवति तत्

१ अत्र शिंशपात्वं वृक्षादन्यत्र क्वचित् न हि वर्तते, यथा यत्र यत्र शिंशपात्वं तत्र तत्र वृक्षत्वमिति शिंशपात्वं वृक्षत्वं स्वरूपम् अत्र यतः शिंशपात्वं वृक्षेण विना न संभवति इति स्वरूपम्

ननु च कथमन्यदन्यस्य स्वरूपं भवेत् नियतिविरोधात्? इत्यत आह परमेशस्वातन्त्र्येति, यत्तु यावत्स्वरूपं न भवति इति, तथाहि अत्र न हि यत्र यत्र वृक्षत्वं तत्र शिंशपात्वं वानीरादिवृक्षे तदभावादिति वृक्षत्वं शिंशपात्वस्वरूपं न भवतीति।

पं० ७ क० पु० चरमपादे एतदेवेति, ग० पु० चरमेण चार्धेनेति पाठः।

तेन विना भवत्येव, यथा वृक्षत्वमृते शिंशपात्वापवादो, न भवन्ति च धरादीनि उत्तरोत्तरतत्त्वानि जलादिपूर्वपूर्वं विना – इति तावत्स्वरूपाण्येव, धरा हि न जलं विना भवेत् – धृतेरेव काठिन्यदर्शनात्, इत्येवं क्रमेण भूतानि तन्मात्रैर्विना कथं, तान्यपि इन्द्रियजृम्भया विना, इन्द्रियाण्यपि तत्तथाविधाध्यवसायेन विना, सर्वाणि चैतदाद्याविभक्तान्वितसूक्ष्मरूपमूलकारणविनाकृतानि न भवन्ति, मूलप्रकृतिरपि भोग्या भोक्तारं विना, तद्भोग्यविभागभागित्वादेव संकुचितं, संकोचवशादेव च स्वात्मारोहितकालकलादि पाशजालं संविदात्मकं चान्तरेण कथं, संविदश्चाखण्डरूपायाः कथं संकोचकारणस्वातन्त्र्यं मायापरपर्यायं विना, संकुचितत्वं स्वातन्त्र्यं च संकोचे संकुचितता-सारतत्संकोचिततारतम्यापेक्षि भवदीषदसंकुचितासंकुचितेषद्विकासिविकस्वररूपं विरहय्य

पं० १६ क० ग० पु० क्षेपि भवत् इति पाठः ।

नैव भवेत्, सर्वमेव चेदं प्रथमानं स्वतन्त्रपरिपूर्णप्रथासारभैरवं विना किंचिदेव न—इति स्वसंवित्सिद्धोऽयं तत्त्वक्रमः। श्रुतिरपि[1] जलात्मिका काठिन्यं विना क्व—इतिधरापि पूर्विका सलिलेऽस्तु इति कथ्यमानम् अपि किं न छेदयेत् प्रत्युत परिपूर्णसर्वात्मकभैरवभट्टारकात्मकपरासंवित्परिपोषणायैव स्यात्, सर्वश्चायं पराभट्टारिकादिरूपपश्यन्त्यादिसत्तासमयोन्विष्यदीषत्स्फुटस्फुट[2]तरादितत्त्वभेदानुसारेण पराभट्टारिकामहसि त[3]दुचितेनैव वपुषा विराजते,

१ श्रुतीति, अयमर्थः—पृथ्वी जलात्मिकाप्यस्तीति मन्तव्यं, कुतः? इत्यत आह—काठिन्यं विनेति, अयं भावः—यदि पृथिवी जलात्मिका न स्यात् तत् स्थितिमेव जह्यादिति काठिन्यं हि जलकृतमेवेति, काठिन्यं परस्परसंश्लेषः।

२ अहन्तायां हि भेदोऽस्फुट एव, इदन्तायां तु स्फुटतरः तत्त्वभेदः यदुक्तमीश्वरप्रत्यभिज्ञायाम्

'अत्रापरत्वं भावानामनात्मत्वेन भासनात्।
परताहन्तयाच्छादात्परापरदशा हि सा॥'

इति।

३ तेजसि परोचितेन।

पं० ५ ग० पु० किं नः छेदयेदिति पाठः।

तत्र हि निःस्वस्येव हस्ते द्रविणमसन्न क्वचिदपि स्यात्, भविष्यद[1]पि वस्तु चरममपि प्रथमप्रकाशे भासेतैव, केवलमेकरसतद्भेदसारस्फुटरूपापेक्षया भविष्यत्ता, तथाहि—भविष्यति कर्की हनिष्यत्यधर्मपरान्—इत्यादि यदि न प्रकाशितं तत् कथं पुराणेषु निबद्धम्, क्वचन सर्गे बभूव कर्की तथैव व्यधित—इति चेत् किं स एवासा[2]वन्य एव वा, अन्यश्चेद[3]प्रकाशोऽसौ, स एव चेत् कथं कालभेदः, अकालकलितश्चेत् कथमिव? चित्त्वाद्विश्वरूपत्वात्—इति चेत् तर्हि अकालकलिते संविदात्मनि सततविश्वशक्त्यवियुक्ते स्वातन्त्र्यवशसंकोचविकासावभासितसंहृतिस्रष्टिमताविरुद्धैकरूपतदात्मकवपुषि पर-

---

१ ननु च परापरादिभेदः परादशायां कथमन्तर्भवेत् यदा हि भेद उद्भवति तदा पश्यन्त्यादिव्यपदेशः, अनुद्भवे पुनः कथं तत्र तद्व्यपदेश इत्यत आह भविष्यदपीत्यादि, प्रथममिति भविष्यत्ताभावेऽपीत्यर्थः ।

२ असाविति भविष्यन् ।

३ अन्यश्चेदित्यस्मन्मतं—स्ववचनेन प्राप्तोऽसीत्यभिप्रायः ।

मेश्वरेऽस्माज्जिह्वाग्रहृदयानपायिनि भैरवभट्टारके सर्वमस्ति—इत्यस्माभिरुपन्यस्यमानमेव मुक्तमन्दाक्षं कथं नाद्रियते विवृततरकण्ठमेव वा स्वयमेव न निर्णीय निरूप्यते, तस्मात् शिवतत्त्वमिदमनाद्यन्तं स्वयं प्रथमानं पूर्णतात्मकनिरपेक्षतामात्रसतत्त्वस्वातन्त्र्यसारमन्तःक्रोडीकृत्यात्मतैकपरमार्थं तत्त्वजातं परसंविदि सततोदितत्वात् सर्वाविरोधित्वात् निखिलानुग्राहकत्वाच्च अवस्थाशब्दव्यपदेशासहिष्णौ यावदकालकलितमासीनं भैरवरूपमवतिष्ठते तावदेतच्छास्त्रसमुचितेनैव महासृष्ट्यादिरूपेण न तु मितसृष्ट्यादिक्रमेण—इति सिद्धम्, स एष एव संपुटेयोगे अस्मद्गुरूणां संप्रदायः—शुद्धपरसत्तया सर्वस्यैव एकैकतत्त्वस्य निखिलस्य च तत्त्वौघस्य संपुटीकरणात्, वक्ष्यते चाप्येतत् 'पश्यन्तीदशायाश्चारभ्य भेदासूत्रणात्मांशांशोल्लासः' इति, ततः प्रभृत्येव शोध्यशोधकभाव

१ हेताविति शब्दः।

इति तावद्व्यवस्थानपह्नवनीया, यथोक्तम्

'यत्सदाशिवपर्यन्तं पार्थिवाद्यं च सुव्रते।
तत्सर्वं प्राकृतं ज्ञेयं विनाशोत्पत्तिसंयुतम् ॥'

इत्यादि, पश्यन्ती च परापराभट्टारिकासतत्त्वा परशक्तेरेव स्वात्मशक्तिर्दर्पणकल्पा यत्र तत्परा-भट्टारिकास्वरूपमेव चकास्ति—प्रतिबिम्बवत्, यच्च[2] रूपं सदा बिम्बे प्रतिबिम्बे चैकतापरमार्थं मुखपरामर्शमात्रमिव न तत्प्रतिबिम्बितं[3]मुच्य-ते—तन्मात्रसतत्त्वादेव, यत्तु तत्रान्यथा तथा च भाति मुखाकार इव पूर्वापरवामदक्षिणतादिवि-

१ अत्र शोध्यशोधकभावतयारोहक्रम इत्यतः पार्थिवाद्यं सदाशिव-पर्यन्तमित्युक्तम्।

२ ननु च पराभट्टारिकायामपि भेदाभेदन्यायेन प्रतिबिम्बकल्पनम-स्त्येव तदपि प्रतिबिम्बोक्त्यैव कथनीयमिति किं परापरायामेवोक्तिरीति-रित्यत आह—यच्चेति, तत्र हि बिम्बप्रतिबिम्बे एकमेव रूपमित्याशयः।

३ यथोक्तमनेनैवान्यत्र इदं हि प्रतिबिम्बस्य लक्षणं यन्नेदेन भासि-तुमशक्तमन्यव्यामिश्रत्वेनैव भाति तत्प्रबिम्बमिति।

पं० ८ ख० पु० न तत्प्रतिबिम्बमुच्यते इति पाठः।

पर्ययात् एतदेवापि तदेवापि तदेव[1] प्रतिबिम्बितमुच्यते तच्च तत्समानधर्मैव भवति, न तु विजातीयम्, एवं च पश्यन्तीसतत्त्वपरापराविमलमुकुरिकायां तत्तत्तथाविधोक्त[2]क्रमपूर्णपृथिव्यादितत्त्वसामग्रीनिर्भरम् अन्तस्तथाविधसहजाकृत्रिमपारमार्थिकानपायिकादिपरामर्शक्रोडीकारेणैव वर्तमानमपि श्रीपराभट्टारिकावपुः प्रतिबिम्बमर्पयत् स्वरूपान्यथात्वसहिष्णुकादिपरामर्शानन्यथाभावेनैव तत्परैकरूपं परामृश्यं धरण्यम्भःप्रभृति तथोल्लसद्भेदसूत्रणतया सजातीयायां विमलायां च यावत्प्रतिबिम्बयति ताव-

---

१ तदेवेति परतत्त्वं परापरशक्ताविल्यर्थः ।

' स्वरूपानपहानेन पररूपसदृक्षताम् ।
प्रतिबिम्बात्मतामाहुः खड्गादर्शतलादिवत् ॥ '

इति ।

' अन्यव्यामिश्रणायोगात् तद्भेदाशक्यभासनम् ।
प्रतिबिम्बमिति प्राहुर्दर्पणे वदनं यथा ॥ '

इति प्रतिबिम्बसतत्त्वमन्यत्र । न देशो नो रूपमित्यादिनयोऽत्र बोद्धव्यः ।

२ कार्यकारणविवेकेनैकैकत्र षट्त्रिंशत्त्वमिति क्रमेण ।

क्षरादितत्त्वानां विपर्यासे[1] एवोपजायते, यत् परसंविदि शक्तितत्त्वं तदेव परापरात्मनि पृथिवीतत्त्वं, यत्तु धरातत्त्वं तच्छक्तितत्त्वम्, इति क्षकारात् प्रभृति धरादीनां स्थितिः। भग-[2]वद्भैरवभट्टारकस्तु सदापूर्णोऽनन्तस्वतन्त्र एव न विपर्यस्यते जातुचिदपि[3]–चिद्रूपातिरेकाद्यभावात् इति उक्तं बहुशः। परात्मनि परामर्शे परामर्शैकतत्त्वान्येव तत्त्वानि, परामर्शश्च कादि-क्षान्तशाक्तरूपपरमार्थ इति, तत्र अभेद एव, परापरायां तु भेदाभेदात्मकता प्रतिबिम्बन्यायेन, सा च परापरामर्शमयी कादि-क्षान्तवर्णमालाशरीरा यावत्स्वोर्ध्वेऽव्यवस्थितपराभट्टारिकानिविष्टतत्त्वप्रतिबिम्बानि धारयति तावत् तेष्वेवामायीयाश्रौतकादि-क्षान्तपरमार्थपरामर्शेषु ऊर्ध्वाधरविपर्यासेन तत्त्वानि संपद्यन्ते, ऊर्ध्वबि-

१ स्वस्वरूपस्येति योज्यम्।

२ ननु च यथा तत्रभेदेन क्षकारादौ द्वितत्त्वव्याप्तिर्न्यायसिद्धा तथा अवर्गेऽपि व्याप्तमित्यत आह भगवदित्यादि।

३ तत्र हेतुः चिद्रूपातिरेकाद्यभावादित्यादि।

म्बाधरप्रतिबिम्बधामस्वभावमहिम्ना—इति तात्पर्यम्, ततः पृथिवी 'क्षकार' इत्यादिशोध्यरूपापेक्षया न किंचिद्विरुद्धम्, तत्रापि परदशानपायात् एष एव कादिवर्णसंतानः, तत्रैव च स्वांशोद्रेकात् स्वांशान्तर्वर्तिमध्यमापदोल्लासात् स्वरूपवर्तमानवैखरीरूपप्रावण्याच्च[1], वर्ण-मन्त्रपदरूपता शोध्यांशवृत्तिः—इत्यास्ताम्, अप्रकृतमेतत्, निर्णीतं च मयैव श्रीपूर्वप्रभृतिपञ्चिकासु, यद्यप्युक्तं श्रीमालिनीभट्टारिकानुसारेण 'अन्यथा चान्यथा स्थितिः' इति तदपि निर्णीय निरूप्यमाणं विमृशन्तु त्रिकोपदेशविशीर्णाज्ञानग्रन्थयः पारमेश्वराः, अनाश्रितश[2]क्त्यात्मकपश्यन्तीपरमकोटिमतिक्रम्य 'पारमेश्वर्यां परसंविदि देवतास्तिस्र' इति यदुक्तं तत् तावन्न प्रस्मर्तुमर्हन्ति तत्रभवन्तः, एवं च परसं-

---

१ प्रावण्यादिति लभ्नत्वात्।

२ अनाश्रितस्य शक्तिस्वरूपा यासौ पश्यन्ती सैव परमकोटिः सर्वभावारम्भावस्था।

विदन्तर्वर्तिनि मध्यमापदे परापराभट्टारिका-विजृम्भास्पदे स्थितिर्विमृश्यते, मध्यमा ताव-त्स्वाधिकारपदे क्रियाशक्त्यात्मनि ऐश्वरे पदे स्फुटवेद्यप्रच्छादकवेदनरूपा वाच्ये वाचकं तत्रापि वाच्यमध्यस्यते, विश्वत्र वाच्ये विश्वा-त्मनि वाचकमपि यदि विश्वात्मैव तदेवं पर-म्पराच्छादनमिश्रीभावात्मनि निर्वहेत् अध्यासः न त्वन्यथा, नहि त्रिचतुरङ्गुलन्यूनतामात्रेऽपि पटः पटान्तराच्छादकः स्यात्, विश्वात्मकत्वं च परस्परस्वरूपव्यामिश्रतया स्यात्, बीजात्मनां स्वराणां वाचकत्वं योनिरूपाणां च व्यञ्जनानां वाच्यत्वं — क्रमेण शिवशक्त्यात्मकत्वात्

'बीजमत्र शिवः शक्तिर्योनिरित्यभिधीयते ।'

इति । तथा

'बीजयोन्यात्मकाद्भेदाद्द्विधा बीजं स्वरा मताः ।
कादिभिश्च स्मृता योनिः·········· ········ ॥'

इति श्रीपूर्वशास्त्रनिरूपणात् शिव एव हि प्रमा-

पं० ७ क० ग० पु० परस्पराच्छादनलोलीभावात्मा निर्वहेदिति पाठः ।

तृभावमत्यजन् वाचकः स्यात्, प्रमेयांशावगाहिनी च शक्तिरेव वाच्या भेदेऽपि हि वाचकः प्रतिपाद्यप्रतिपादकोभयरूपप्रमातृस्वरूपाविच्छिन्न एव प्रथते, शिवात्मकस्वरबीजरूपा इयानतैव शाक्तव्यञ्जनयोनिभावो – बीजादेव योनेः प्रसरणात्, इति – समनन्तरमेव निर्णेष्यामः, अत एव स्वरात्मकबीजव्यामिश्रीभावश्चेद्योनेः तत्समस्तफलप्रसवो हन्त निर्यत्नः – इत्यपवर्गभोगावकृष्टपच्यावेव भवतः, बीजवर्णोऽपि स्वात्मनि योनिवर्णोऽपि तथैव – इति किं कस्य भेदकम् – इति कथ्यमानं नास्मानाकुलयेत्, ये वयमेकां तावदनन्तचित्रतागर्भिणीं तां संविदात्मिकां गिरं संगिरा[1]महे, मायीयेऽपि व्यवहा-

---

१ यथोक्तम्

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गम्यते ॥'

तथा

'वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥'

इति ।

रपदे लौकिकक्रमिकवर्णपदस्फुटतामयी एकपरामर्शस्वभावैव प्रत्यवमर्शकारिणी प्रकाशरूपा वाक्, अन्यैश्च एतत्प्रयत्नसाधितम्, इह च एतावदुपदेशधाराधिशयनशालिनामप्रयत्नत एव सिद्ध्यति इति नास्माभिरत्र वृथा वैयाकरणगुरुगृहगमनपूतशरीरताविष्क्रियामात्रफले निर्बन्धो विहितः, एवमेव नवात्मपिण्डप्रभृतिष्वपि मालामन्त्रेष्वपि च क्रमाक्रमपूर्वापरादिभेदचोद्यप्रतिविधानं सिद्धमेव, एवं भगवती मालिन्येव[1]

---

१ ह्रीं न फ ह्रीं इति शक्तिमन्त्रः, ह्रीं-अ-क्ष-ह्रीमिति शक्तिमद्वाचकः,
'न फ कोटिसमावेशभरिताखिलसृष्टये ॥'

इति बहुरूपगर्भे ।

'न शिखा ऋ ॠ ऌ ॡ च शिरोमालाथ मस्तकम् ।
नेत्राणि चोर्ध्वेऽधोऽन्ये ई घ्राणं मुद्रे णु णू श्रुती ॥
ब कवर्ग इ आ वक्रदन्तजिह्वासु वाचि च ।
व-भ-याः कण्ठदक्षादिस्कन्धयोर्भुजयोर्ड-ढौ ॥
ठो हस्तयोर्झ- ञौ शाखा ज-टौ शूलकपालके ।
प हृत् छ-लौ स्तनौ क्षीरमास जीवो विसर्गयुक् ॥
तत्परः कथितः प्राणः ष-क्षावुदरनाभिगौ ।
म-श-ताः कटिगुह्योरुयुग्मगा जानुनी तथा ॥
ए-ऐकारौ तथा जङ्घे तत्परौ चरणौ द-फौ ॥

इति न्यासः । कर्णयोरूर्ध्वे णौ मुद्रे कर्णपाली संविवेशस्तत्र उ ऊ इति ।

मुख्यपारमार्थिकमध्यमाधामशक्तिसतत्त्वम्, अत एवोक्तं श्रीपूर्वशास्त्रे

'यथेष्टफलसंसिद्ध्यै मन्त्रतन्त्रानुवर्तिनाम् ।
न्यसेच्छाक्तशरीरार्थं भिन्नयोनिं तु मालिनीम् ॥'

इति भिन्नयोनित्वं च निर्णीतम्, अन्यत्रापि

'न पुंसि न परे तत्त्वे शक्तौ मन्त्रं निवेशयेत् ।
जडत्वान्निष्क्रियत्वाच्च न ते भोगापवर्गदाः ॥'

इति । एवं च स्थिते सर्वसर्वात्मकत्वात् यदेव 'न ऋ ॠ ऌ ॡ थ च ध ई ण उ ऊ ब क ख ग' इत्यभिहिता इहत्यपरसंविदमपेक्ष्य क्रमेण,

---

१ शाक्तं यथा

'देहगध्वसमुन्मेषे समावेशस्तु यः स्फुटः ।
अहन्ताच्छादितोन्मेषि भावीदंभावयुक् स च ॥
व्यक्ताव्यक्तमिदं लिङ्गं मन्त्रवीर्यं परापरम् ।
नरशक्तिसमुन्मेषि शिवरूपाद्विभेदितम् ॥'

यथोक्तमन्यत्र

'पुंस्तत्त्वे जडतामेति परतत्त्वे तु निष्फलः ।
शक्तौ मन्त्रो नियुक्तस्तु सर्वकर्मफलप्रदः ॥'

इति । अत्र विशेषोऽन्यत्र

'व्यक्ताद् सिद्धिप्रसवो व्यक्ताव्यक्ताद्द्वयं विमोक्षश्च ।
अव्यक्ताद्बलमाद्यं परस्य नानुत्तरे त्वियं चर्चा ॥'

इति ।

श्रोत्रं नादात्मकभावरूपं योन्यात्मामृताप्याय-कारिणि बीजचतुष्काप्यायभूमौ पतितं बृंहित-त्वमवाप्य झटिति ग्रहणात्मकरससतत्त्वरसना-मयत्वं प्रतिपद्य धरण्याकारगन्धविशेषीभूय तत्रैव स्पर्शकरणतां श्रित्वा एतावच्च शाक्तं यौनं धाम ईशानबीजेनाधिष्ठाय वागात्मनि करणशक्तौ प्र-तिफलितं, ततोऽपि करणशक्तेरुन्मेषोर्ध्वाश्रयण-बीजरूपतया बुद्धिरूपां शाक्तयोनिमधिशय्य पृथिव्यप्तेजोयोनिसमाविष्टं पश्यन्तीरूपानुभूत्यां तु ग्रहणात्मकपाणिरूपायां तत्रैव बीजेषु प्रसृत्य चाक्षुष्यां भुवि तत्सामान्या शुद्धविद्या करणे तत्सर्वान्त्यकरणे च घ्राणे स्थित्वा ईशानबीजे-नाक्रम्य श्रोत्रशक्तिमालम्ब्योन्मेषोर्ध्वबीजयोगेन आनन्देन्द्रिययोनिगं सदाशिवेश्वरशुद्धविद्या-मयं भवति, इति सर्वाग्रमध्यान्तगामित्वेनाप-रिच्छिन्नमनन्तशक्ति शिवतत्त्वम् अत्रोक्तं भवति,

१ 'आत्मन्येव च विश्रान्त्या तत्प्रोक्तममृतात्मकम् ।' इति चोक्तमन्यत्र ।

मालिन्यामिहत्यापरसंविदनुसृत्या पश्यन्त्या-त्मकसत्तानुसृत्या च क्रमेण वायुर्माया चेति, 'प-घ' सादाख्ये नभः 'ख-ला-च-ङ' ईश्वरः, इच्छैव शक्तिमयी शुद्धविद्या, अनुत्तर एव स्वतन्त्रोऽहंभावः 'अ' शिवाख्यो माया 'भ' शुद्ध-विद्या रागः स्पर्शश्च 'यः' कालः पायुरहंकृच्च 'ड' नियतिः हस्तौ मनश्च 'ढकारः' आनन्देन्द्रियं बुद्धिश्च 'ठः' पुमांश्च 'ञः' धीरूपं नियतिश्च 'जः' अहंकृतं नियतिरूपं च 'रः' मनः पादेन्द्रियं प्रकृतिश्च 'टः' श्रोत्रं मनो हस्तश्च 'प' त्वग्रसः कालश्च 'ध-ल' रसना आनन्दशक्तिः शैवी 'आ' घ्राणं विद्यातेजश्च 'स' वाग्विसर्गशक्तिश्च 'अः' करौ ईशो जलं च 'ह'. पायुर्माया वायुश्च 'ष' आनन्देन्द्रियं सादाख्यं पृथिवी 'च' 'क्ष' पादौ पुमान् शब्दश्च 'स' शब्दः कला नभश्च 'श' स्पर्शः बैन्धवी शिवशक्तिः 'अं' रूपं नासिका त्वक् च 'त' रसः शिवशक्तिः सात्त्वी 'ए' गन्धः

यत्रैव देहे प्राणे वा भवति, यथा[1] काश्चिदेवौषध्यः समुद्धूय किंचिदेव कार्यं विदधते तथा काचिदेव समुद्भूय भावना मन्त्रन्यासहोमादिगतिर्वा कांचिदेव सिद्धिं वितरेत्, अत्रापि यावन्नियतिव्यापारानतिक्रमात्, तथाहि प्रतिशास्त्रमन्यथा चान्यथा च वर्णनिवेशपुरःसरं निजनिजविज्ञानसमुचिततत्तद्वर्णभट्टारकप्राधान्येन तत्तद्वर्णप्राथम्यानुसारायातनियतपरिपाटीपिण्डितवर्णसमूहरूपः प्रस्तारो निरूपितः, तत एव च मन्त्रोद्धारो निरूपितः, तामेव मातृकारूपां तथाविधवीर्यदानोपबृंहितमन्त्रस्फुरत्तादायिनीं दर्शयितुं, यथा श्रीनित्यातन्त्रेषु एकारात्मकमोहनबीजप्राधान्यहेतुपरं[2]नादात्मनिवेशप्राधान्यात् तदनुसारापतितश्रीमन्त्रादिफान्तक्रमेणैव निवेशः, अत्र कुलपुरुषाणां कुलशक्तीनां च एष एव

१ ननु च यद्येवं तर्हि स्वेच्छातन्त्रत्वात् सर्वमेव सर्वसिद्धिप्रदं भवेदिति किं नियमो निबद्ध इत्यत आह यथेत्यादि ।

२ हेतुपरनादात्मेत्यपि पाठः सद्भिः स्वीकृतः उत्तमार्थाभिप्रायेण न तु प्रस्तावापेक्षयेति ।

निवेशो अभिप्रायः, न च वर्णमन्त्रादिगुप्तिमात्र-मेव फलं, तथा – श्रीवाजसनेयतन्त्रे वर्णान् यथोचितं निवेश्योक्तम्

'इत्येतन्मातृकाचक्रं दिव्यं विष्णुपदास्पदम् ।
ज्ञातं गुरुमुखात्सम्यक् पशोः पाशान्निकृन्तति ॥'

इति । तथा श्रीत्रिकहृदयेऽपि

'चक्रशूलाम्बुजादीनां प्राणिनां सरितां नृणाम् ।
आयुधानां च शक्तीनामन्यस्यापि च कस्यचित् ॥
यो निवेशस्तु वर्णानां तद्वीर्यं तत्र मन्त्रगम् ।
तेन गुप्तेन ते गुप्ताः शेषा वर्णास्तु केवलाः ॥'

इति । तथाहि – मन्त्राणामक्षरमात्रान्यथाभावेऽपि तेषा[1]मेव शास्त्रेष्वाणवशाक्तशाम्भवादिविभागेनान्यथात्वम् यथा मायाबीजस्य प्रणवस्य सर्वस्यामृतबीजस्य वैष्णव-शैव-वामादिशास्त्रेषु, यथा वा चतुष्कलभट्टारकस्य कौलोत्तरादौ श्रीमदुच्छुष्मशास्त्रे च, अत्र च कुलपुरुषबहुभेदप्रकटनायामभियुक्तानामुपायो लिख्यते

---

१ समानानामेव ।

'पूर्वे परेषामपरे परे पृष्ठवदेव च ।
पूर्वेऽपि च यथापूर्वं मातृकाया विधिर्मतः ॥
एतेनैवानुसारेण भिन्नयोनिस्वरूपतः ॥
शाक्ताद्यसंख्या देवीयं परैवोत्तरमालिनी ॥'

इति ।

'ऊर्ध्वाधो विनिविष्टेषु भेदसंख्येषु धामसु ।
एकं बिन्दुरथापि प्रागन्येषु प्राक्तनान्त्यगाम् ॥
स्वपृष्ठगां च तां संख्यां विनिवेश्यैकतः क्षिपेत् ।
अस्मादन्यैर्भवेत्संख्या स्पृष्टैरिष्टैः पुनः क्रमः ॥
यथोक्तं कुलशक्तीनां विधिरानन्त्यवेदने ।'

तदेतेन विधिना ये कुलपुरुषशक्तियोगिनो निरधिकारीभूताः, यथोक्तम्

'ब्रह्मादिस्तम्बपर्यन्ते जातमात्रे जगत्यलम् ॥
मन्त्राणां कोटयस्तिस्रः सार्धाः शिवनियोजिताः ।
अनुगृह्याणुसंघातं याताः पदमनामयम् ॥'

इति मन्त्रमहेश्वराः, न तु मन्त्राः—तेषां स्वलयावसरे अनामयपदपर्यन्तताभावः, तेभ्यो नैव मन्त्रोद्धारः—तस्य निष्फलत्वात्, तत एव

'अभिन्नयोनिमध्ये तु नादिफान्तं कलौ युगे ।'

इति, तदेवं भगवती पराभट्टारिका पदभेदशालिनी मध्यमया मुख्यया वृत्त्या भगवन्मालिनीरूपैव अनन्ता परिगणनप्रदर्शितवैश्वरूप्यस्वस्वरूपापीति, तत्रापि च तथैव स्वात्मनि सर्वात्मकत्वेनांशत्रयोद्रेकात् वर्ण-पद-मन्त्रात्मकत्वम्, एतच्च शोधनकरणभावेन इति मन्तव्यम्, पश्यन्त्यंशोल्लसन्तो हि पाशाः सूक्ष्मा एव शोध्या भवन्ति—अन्तर्लीनत्व एव पाशत्वात्, उदितोदितविजृम्भामयशाक्तप्रसरे तु मध्यमापदे शोधनकरणतैव अन्तर्लीनपटमलापसरणे बाह्यस्थूलमलस्येव तत्, पराभट्टारिकासंविदन्तर्गतं तु वैखरीपदं विमृश्यते न हि तत्रैव वैखर्या असंभवः, तथाहि—बाला द्वित्रैर्वर्षैः यद्यपि स्फुटीभूतस्थानकरणाः भवन्ति तथापि एषां मासानुमासदिनानुदिनमेव वा हि उत्पत्तिरधिकाधिकरूपतामेति—इति तावत् स्थितम्, तत्र यदि मध्यमापदे तथाविधवैखरीप्रसरस्फुटीभविष्य-

त्स्थानकरणाविभागवर्णांशस्फुरणं न स्यात् तद-हर्जातस्य बालकस्य मासजातस्य संवत्सरजातस्य वा व्युत्पत्तौ न विशेषः स्यात्, मध्यमैव सा व्युत्पत्त्या विशिष्यते? इति चेत्, कथमिति चर्च्यतां तावत्—शृण्वन्नेव ताञ्शब्दान् पश्यंश्चार्थान् व्युत्पद्यते, वर्णांश्च श्रूयमाणानेव परामृशेत्, श्रूयन्ते च वैखरीमयाः, तेषु च असौ रूपी एव जात्यन्धवत्, तस्मात् अन्तर्मध्यमानिविष्ट-स्थानकरणादिमयी अस्त्येव वैखरी मूकेऽपि एवमेव, सर्वात्मकत्वं च संविदो भगवत्या एवोक्तम्, एवं च वैखरीपदमेव मध्यमाधामलब्ध-विजृम्भं स्वांशे परस्परवैचित्र्यप्रथात्मनि स्फुट-वाच्यवाचकभावोल्लासे जाते तत्त्वजालमन्तः-कृत्य यावदास्ते तावदपराभट्टारिका, तदन्तर्वर्तिमध्यमापदोल्लासे परापरा, पश्यन्त्युल्लासे च स्वरूपतो भगवती देवी च इति शोधकभावेन स्थितिः त्रैधमेवावतिष्ठते, शोधको हि विश्वात्मा विततरूपो, वैतत्यं चैवमेव भवतीत्युक्तम्, शो-

धनं प्रति तु करणत्वं कर्तुरेव स्वस्वातन्त्र्यगृहीतसंकोचस्य शाक्तमहिमविश्रान्तस्य भगवतः, शोध्यता तु संकोचैकरूपस्य सप्तत्रिंशातिक्रान्तत्रिकैकरूपभैरवभट्टारकाविनिर्भक्तपराभट्टारिकातुल्यकक्ष्यपरापरादेवताक्षोभात्मकसदाशिवज्ञानशक्तिविस्फारितपशुशक्तिरूपपश्यन्तीधामप्रथमासूत्रितभेदात्मनो नरात्मनः पाशजालस्य, इति निर्णयः । यथोक्तं श्रीसोमानन्दपादैः शिवदृष्टौ

'अस्मद्रूपसमाविष्टः स्वात्मनात्मनिवारणे ।
शिवः करोतु परया नमः शक्त्या ततात्मने ॥'

इति सर्वक्रियाकलापे एवंरूपतासूचकं शिव-

---

१ अयमत्र तात्पर्यार्थः

'स्वातन्त्र्यहानिर्बोधस्य स्वातन्त्र्यस्याप्यबोधता ।
द्विधाणवं मलमिदं स्वस्वरूपापहानितः ॥
भिन्नवेद्यप्रथात्रैव मायाख्यं जन्मभोगदम् ।
कर्तर्यबोधे कार्मं तु मायाशक्त्यैव तत्त्रयम् ॥'

इति पाशसमूहः स्थूलः, ऊर्ध्वमपि पाशजालं सूक्ष्मरूपेणास्तीति प्रथमासूत्रितेत्युक्तम् ।

दृष्टौ, तत्रापि च उत्तरोत्तरं शोध्यशोधकानामपि विगलनम्

'त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज ॥'

इति । तदियमेतावती धारा यच्छोधकमपि शोधनमपि शोध्यमेव—इति श्रीषडर्धशास्त्रे एवोक्तम्, एकोत्कर्षः तिसृणामपि चासां युगपत् स्थितिर्भवत्येव, वक्ति ह्यन्यत् विकल्पयंश्च अन्यत् जल्पत्यविकल्पमेव अन्यत्पश्यति, अत्र तु परिपूर्ण एव तावति भगवान् भैरव एव—इत्याद्यनुभवसंप्रदायोपदेशपरिशीलनेन—अस्यार्थस्य स्वसंविन्मयस्यानपलापनीयत्वात् न तत् युगपत् अपि तु 'तथा-सौक्ष्म्याद्लक्षणम्' इति यौगपद्याभिमानः शिरीषकुसुमपल्लवशतऽयतिभेद इव इति चेत्, केयं खलु भाषा—युगपत् इति, समानकालम्—इति चेत् अन्तर्मुखे संविदात्मनि प्रोक्तनयेन कः कालः तस्य ज्ञेयरूपप्राणगमागमादिमयाभासतदभावप्राणत्वात्, ज्ञे-

योपाधिगतोऽपि ज्ञानमवस्कन्देत् सः, इति चेत्–ज्ञेयस्य स्वात्मनि भासामयेऽन्यथा वा कोऽस्य विशेषो ज्ञानमुखेनोक्तः, इतरेतराश्रय-संप्लवः स्वतो भेदात् इत्याद्यपि सर्वमुच्यमानं ज्ञानमुखमेवापतेत्, तथा च स एव दोषो बहु-तरकुसुमपल्लवशतव्यतिभेदोऽपि चानेक इत्युच्य-माने सर्वत्र सूक्ष्मः–परमाण्वन्तावयवयोगात् नास्ति कर्म–इत्यापतेत्, न च अनुसंधानं ज्ञानाभावेन सह स्यात्–अनुसंधायाः स्मृति-भेदे तस्याश्च अनुभवोपजीवित्वेऽनुभवाभावात्। वितत्य च विचारितं मयैतत् पदार्थप्रवेशानिर्ण-यटीकायाम्,–इति किमिह वृथावाग्जालेन प्र-कृतोपदेशविघ्नपर्यवसायिना। एवं भगवत्यपरा शोधकभावेन स्थिता परापरापि च यत्र भगव-तीनामघोरादीनां शक्तीनां स्थितिः–यद्योगात् विज्ञानाकलसाधकयोगिनो मन्त्रमहेशादिरूपे-णाघोराद्याः संपन्नाः, ब्राह्म्यादिशक्त्यनुग्रहेणैव

पं० ३ क० ग० पु० कोस्य निवेश इति पाठः।

साधकाणवो ब्रह्मविष्णवादयः, परमेश्वरो हि भैरवभट्टारकः समग्रशक्तिपुञ्जपरिपूर्णनिर्भरवपुर्निजशक्तिनिवेशनया ब्राह्म्यादीन् स्वातन्त्र्यात् करोति इति किमन्यत् । एवं शोधकस्यापि शोध्यत्वमित्यन्य उत्कर्षः

'……………………कुलात्परतरं त्रिकम् ।'

इति स्थित्या, ततश्च शोध्यशोधनशोधकानां सर्वत्रैव त्र्यात्मकत्वात् त्रिकमनपायि, यथोक्तं मयैव स्तोत्रे

'………………यत्र त्रिकाणां त्रितयं समस्ति ।'

इति । न चैवमनवस्था – सर्वस्यास्य भगवत्परसंविदेकमयत्वात्

……………………येन त्यजसि तत्त्यज ।'

इत्येवमेव मन्तव्यं शोधनमपि अन्ततः शोधकोऽपि वा भेदांशोच्छलत्तायां पाशात्मकत्वात् शोध्य एव शोधनं च परमार्थतः सर्वमलप्लोषचतुरभैरवसंविदभेदि हुतवह एव सर्वस्यानुप्रवेशो परिपूर्णतैव, यद्वक्ष्यति

'एवं यो वेत्ति तत्त्वेन'

इत्यादि। तत् परसंविदेकमयपरापरादिदेवतानां सर्वात्मकत्वात्

'परापराङ्गसंभूता योगिन्योऽष्टौ महाबलाः।'

इत्यादिवचनात् लौकिकशास्त्रान्तरीयादिवाच्य-वाचकानन्त्यमपि संगृहीतम्। तत् एवं कृतकरिष्यमाणाद्यनन्तसंकेतगर्भीकारेणैव अयं शोध्य-शोधकभावो न चानवस्था नातिप्रसङ्गो नातिव्याप्तिर्न संकेतितस्यापारमार्थिकता—इति स्थितम्, एवं स्थिते प्रकृतमनुसरामः—अकाराद्या एव कालयोगेन सोमसूर्यौ यौ तौ तदन्तः प्रकीर्तिताविति संबन्धः, तच्छब्देन प्राक्तन-श्लोकोक्तमकुलं भैरवात्म परामृश्यते, तेनाकुलमेवान्तर्गृहीतकलनाकं—कुलशक्तेरत्रैव[1] निवेशात्, कलनात्मिका हि विमर्शशक्तिः तामन्त-

१ अत्रेत्यकुले।

'शुद्धबोधैकरूपो योऽवस्थाता सैव तुर्यता।'

इति। यथा च विज्ञानमानन्दं ब्रह्मेति, विज्ञानाकलावस्था हि तुर्यता यदि

रेणाकुलमपि तुर्यातीतं नाम न किंचित्—सौषुप्तपदाविष्टत्वात्, तुर्यानन्तरताया अपि समानत्वात्, विमर्शशक्तिश्च परा परमेश्वरी भैरवभट्टारकस्य निरतिशयस्वातंत्र्यात्मिका पूर्णकृशतदुभयात्मतदुभयरहितत्वेनावतिष्ठते, तत्र यद्यपि

---

तत्र कलनात्मिका शक्तिर्न स्यात् तदा तुर्यातदतीतयोः को विशेषः स्यादित्यर्थः। तथैव स्पन्दशास्त्रे

'तदा तस्मिन्महाव्योम्नि प्रलीनशशिभास्करे।
सौषुप्तपदवन्मूढः प्रबुद्धः स्यादनावृतः॥'

इति। तथा

'शक्त्या गर्भान्तर्वर्तिन्या शक्तिगर्भं परं महः।'

इत्यभिप्रायः।

१ यदुक्तं राजनकमङ्खेन स्तुतौ
'एकस्त्वं त्रिनयन दृश्यसेऽधिकर्तुं
ज्ञातुं वा त्रिभुवनमीश्वरः प्रकाशः।
तादात्म्यं विवृतवती विमर्शशक्ति-
र्भेदेऽपि प्रथयति तेन भेददोषम्॥'

इति।

२ सर्वस्य स्वात्मान्तःक्रोडीकृत्य वर्तमानत्वात् पूर्णा स्वस्वरूपव्यतिरिक्तस्य भारीभूतस्य कस्यचिदपि सत्ताभावात् कृशपूर्णत्वं व्यतिरिक्तेणोपपद्यते कृशत्वं चेत्यतस्तदुभयात्मकत्वं तदुभयराहित्यं च।

न कश्चिदत्र क्रमयौगपद्योदयकलङ्कः[1] प्रोक्तोपदेशनयेन एतावत्याः पराभट्टारिकासंविदोऽनन्तागामिप्रलयोदयात्मकस्वस्वभावविमर्शैकघनत्वादिति

'स्वतन्त्रः परिपूर्णोऽयं भगवान्भैरवो विभुः ।
तन्नास्ति यन्न विमले भासयेत्स्वात्मदर्पणे ॥'

इति नीत्या क्रमयौगपद्यासहिष्णुस्वात्मरूपमध्य[2] एव यावत् क्रमाक्रमावभासः तावत् तदनुसारेणायं क्रमो विचारणीयः, अक्रमस्य[3] तु तत्पूर्वकेण संविद्येव भावात्प्रतिपादनाय[4] अस्तु—

१ क्रमयौगपद्योदयो हि सृष्ट्याद्यधीनः, सृष्ट्यादयश्च स्वस्वभावविमर्श एवेति तात्पर्यम् । एतावत्या इति पूर्णकृशत्वादिपरिमाणायाः । स्वातन्त्र्यं चास्यैतदेव—यत्सृष्ट्यादिभेदाभासेऽपि ऐतदात्म्यमिति, तत्र हेतुः—परिपूर्ण इति, भेदस्यापि प्रकाशानन्यत्वादिति भावः ।

२ न चैतन्मन्तव्यं—क्रमे हि स्वातन्त्र्यखण्डना यौगपद्यं कथं न स्यात् इति क्रमापेक्षतयैव यौगपद्यमित्यदोषः ।

३ यदि च क्रमो विचारणीयः तर्हि अक्रमोऽप्येवं विचारणीय इत्यतोऽक्रमेत्यादि ।

४ कथं तर्हि क्रमाक्रम इत्यत्राक्रमोच्चारणमित्युच्यते—प्रतिपादनेत्यादि ।

सर्वथैव सक्रमत्वात्, तथा च सर्व एवायं वाग्रूपः परामर्शः क्रमिक एव, अन्तःसंवित्मयस्त्वक्रम एव—इति सदैवेयमेवंविधैव एवमेव विचित्रा पारमेश्वरी पराभट्टारिका, ततस्तत्क्रमानुसारेण अत् इत्यादिव्यपदेशः, एवं परमेश्वरस्य स्वात्मनि इच्छात्मिका स्वातन्त्र्यशक्तिरनुन्मीलितभावविकासा तथाविधान्तर्घनसंवित्स्वभावविमर्शसारा 'अ' इत्युच्यते। सा चावस्थानेन इच्छेति व्यपदेश्या इष्यमाणानुद्रेका, तत एवानुत्तरसत्तापरामर्शात्मिकैव एषा, परमेश्वरः सततं स्वस्वरूपामर्शकोऽकुलशक्तिपदात्मकमपि रूपमामृशन् यद्यपि कुलशक्तीरनुयातु तथापि कुलपरामर्शतोऽस्य स्यादेव विशेषः—इति भैर-

१ यदुक्तं महार्थमञ्जर्याम्

'सञ्जिति हृदयप्रकाशो भवनक्रियाया भवति कर्ता।
सैव क्रियाविमर्शः ........................... ॥'

इति।

पं० ५ क० ग० पु० आदित्वादिव्यपदेश इति पाठः।
पं० ९ क० ग० पु० इष्यमाणाद्यनुद्रेकात् तत इति पाठः।

वशक्तिमद्विमर्शसत्तेयं तादृश्येव[1] पुनः प्रसरन्ती आनन्दशक्तिः 'आ' इति प्रसृता। परिपूर्णेच्छा 'इ' इति। इच्छैव भाविज्ञानशक्त्यात्मकस्वातन्त्र्येण जिघृक्षन्ती ईशनरूपा 'ई' इति। उन्मिषन्ती तु ज्ञानशक्तिरिष्यमाणसकलभावोन्मेषमयी 'उ' इति। उन्मिषत्तैव उन्मिमिषतामपि अन्तःप्राणसर्वस्वरूपोन्मेषोत्तरैकरूपैरपि अन्तःकरणवेद्यदेशीयास्फुटप्रायभेदांशभासमानभावराशिभिः संकोचवशेन ऊनीभूतानुत्तरसंवित्सर्वभावगर्भीकारेण अनङ्कधेनवीरूपपरदेव-

१ तादृश्येवेति, परस्परौन्मुख्यात्मिका स्पन्दरूपा स्वात्मोच्छलन्तीत्यर्थः।

'यदा तु तस्य चिद्धर्मप्रभवामोदजृम्भया।
विचित्ररचना नानाकार्यसृष्टिप्रवर्तने॥
भवत्युन्मुखिता चित्ता सेच्छायाः प्रथमा तुटिः।'

इति स्पन्दात्मिका बहिरौन्मुख्यमात्ररूपिणी स्रष्टव्यानारूषितेच्छामात्ररूपा वा स्यात् तत्तदीशनीयविषयारूषणया प्रक्षोभात्मप्रयत्नरूपतां श्रयन्ती बह्वीरूपतयैश्वर्यं भजमाना वेत्यस्या द्वैधम्। यदुक्तं मध्यायां 'सा केवलमिच्छामात्ररूपा स्रष्टव्यस्य विप्रकृष्टा काचित् पुनः प्रयत्नतामापन्ना सन्निकृष्टेति' तत्रेशानरूपत्वमस्याः।

ताया ऊधोरूपा ऊढसकलभावराशिः सुस्फुटा प्रसृता ज्ञानशक्तिः 'ऊ' इति । तदेवमेते परमेश्वरस्य भैरवस्य द्वे शक्ती, प्रथमा स्वरूपपरिपूरणारूपत्वात् पूर्णा चान्द्रमसीशक्त्यव्यतिरेकाच्च सहोमया वर्तत इति सोमरूपा स्वानन्दविश्रान्तिभावा इच्छाख्या कलना महासृष्टिव्यपदेश्या, यद्वक्ष्यते 'तत्र सृष्टिं यजे दिति' (२८) । द्वितीया तु तत्स्वरूपभावराशिरेचनानुप्रवेशोद्रिक्ता तद्रेचनादेव कृशा भावमण्डलप्रकाशनप्रसारणव्यापारा सूर्यरूपा स्वरूपभूता कुलसंवित्संजिहीर्षात्मिका महासंहारशक्तिर्ज्ञानाख्या, तत्रापि च प्रसरत्प्राक्तनरूपपर्यालोचनावशात् स्वात्मनि यथाक्रमं सोमसूर्यरूपतायुगलकभावेन स्वसंविदात्मकं भावाख्यं च रूपमवेक्ष्य विपर्ययोऽपि सोमसूर्यात्मकसृष्टिसंहृतिकलनयोः, न च 'अत्रानवस्था — ज्ञानेच्छयो-

---

पं० १ क० पु० ऊर्ध्वाधोरूपारूढेति, ग० पु० ऊर्ध्वोपारूढेति पाठः ।

पं० १२ ग० पु० प्रसरत्तत्प्राक्तनेति पाठः ।

पं० १३ ग० पु० सूर्यसोमरूपभायुगलेति पाठः ।

रपि प्रसराप्रसरान्तरादिरूपत्वं, तयोरपि प्रसराप्रसरयोरिच्छाज्ञानप्रसराप्रसरान्तरादिपरिकल्पनाप्रसङ्गात्' इति वाच्यम् उपसंहरत बाह्यविभ्रमभ्रमभ्रमणं तावत्, अनुप्रविशत सूक्ष्मां विमर्शपदवीम्, यावद्धि घटादावपि विज्ञानं जायते तावदेव ज्ञेयघटाद्यंशकर्बुरीकृतस्वयंप्रथं ज्ञानं प्रथत एव, तत्रापि च तद्रूपकर्बुरीभावघटादिप्रथमसूक्ष्मोल्लासोऽपि संवेद्यः—एकभावोद्गमस्य अन्यतः कुतश्चिदभावस्य प्रथमानत्वात्, संविद एव स्वातन्त्र्यं भावोज्जिगमिषात्मकमीशनं स्वसंवित्प्रमाणलब्धमेव, तद्भावानुच्चयरूपा संविद्धना परिपूर्णा स्वातन्त्र्यसत्तापि संवेद्या, स्वात्मन्यानन्दघनो भवंस्तथा स्वतन्त्रः स्यात्—इत्यानन्दोऽपि नापह्नवनीयः, अनुत्तरश्च शक्तिमानव्यपदेश्यपरचमत्कारसारो भैरवभट्टारकः सर्वत्र कर्तृत्वेन भासत एव, तत्रापि त्वनुत्तरानन्देच्छेशनोन्मेषणे न त्वनिमेषाणां स्वरू-

---

पं० ५ क० ग० पु० घटादावपि ज्ञानं न जायते तावत् ज्ञेयेति पाठः ।

पं० १७ ग० पु० नन्देच्छेशनोन्मेषो न त्वनिमिषाणामिति पाठः ।

पविमर्शे, तेषां विच्छेदविचारणेन ज्ञानभूमिमधिशयानानां ता एव भगवत्यः संविच्छक्तयः समापतन्त्यनन्या एव स्वयं संविदः—परिपूर्णत्वेनाभेदात्, संवेद्योपाधेश्च भेदकत्वात्—तस्य देहसंवेद्यमात्रतयैव भावात्, अत एव श्रीतन्त्रसारे 'निजोत्तमाङ्गच्छायातत्त्वम्' इत्युक्तम्

'स्वपदा स्वशिरश्छायां यद्वल्लङ्घितुमीहते ।
पादोद्देशे शिरो न स्यात्तथेयं बैन्दवी कला ॥'

इति । तदेवं षट्कं प्रवृत्तं ज्ञानशक्त्यन्तम् । क्रियाशक्तिस्तु प्रसरन्ती विचार्यते—इच्छाज्ञाने एव

---

१ अयमर्थः—स्वशिरश्छाया यथोत्तरोत्तरगामित्वात् स्वपादाक्रमणं न सहते तथा ज्ञानशक्तिः, इयमपि नोत्तरोत्तरगामित्वात् ज्ञेयाद्यपेक्षां सहते । यो हि इत्थं मन्यते ज्ञेयादिसापेक्षं ज्ञानशक्तिस्वरूपमिति तदत्र स्वप्रकाशत्वादस्याः कथमीदृशी विडम्बनेति स्वानुभवशून्यानामनवसरेऽपि महती खलु भ्रान्तिः । यदुक्तं

'भ्रान्तेर्महती शक्तिर्न विवेक्तुं शक्यते नाम ।'

इति, ज्ञेयादिसत्तायां स्थूलदृश्वनां स्फुटं ज्ञानशक्तेराविर्भावः, ज्ञेयाद्यभावेऽपि सूक्ष्मदर्शिनामस्त्येव स्वप्रकाशत्वेन ज्ञानादिशक्त्याविर्भाव इति तात्पर्यम् ।

परस्परस्वरूपसांकर्यवैचित्र्यचमत्कारमयपूर्वापरीभूतस्वरूपपरिग्रहे संरम्भसारा क्रिया, तत्र यद्यदन्यव्यामिश्रितसांकर्यमन्यसंबन्धादेति तत्तदनामर्शनीयशून्यप्रायस्वरूपाक्रमणपुरःसरीकारेण तथा भवति—प्लवानामिव भेकादिः, तत्रानुत्तरानन्दात्मकं वपुर्न व्यपसरति—अव्यपदेशरूपत्वात्, सर्वज्ञानेषु सर्वाधारवृत्तित्वेन पर्यव-

---

१ पूर्वापरीभूतावयवरूपा हि क्रिया। उक्तं च हरिणा

'यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते॥'

इति। तथा

'गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।
बुद्ध्या प्रकल्पितो भेदः क्रियेति व्यपदिश्यते॥'

इत्यत्र च पूर्वापरत्वं परस्परसांकर्येणैवेति।

२ असर्वज्ञानत्वं चेत्थम्

'परं ब्रह्म क्षुद्रं तव नियतमानन्दकणिका।'

इति। तथा

'परं ज्ञानं कथं देव'

इति प्रश्ने

'शक्त्या गर्भान्तर्वर्तिन्या शक्तिगर्भं परं महः।'

इत्युत्तरं दत्तम्। गीतायामपि

स्यति—पर्यन्तभित्तिरूपत्वात्, अपि तु क्रमसहिष्णुत्वात् संरम्भेच्छैवेशनान्ता स्वात्मनि अनुत्तरानन्दपदे च प्रसरणक्षमा, ततः सैव शून्यात्मकं स्वं वपुरवगाहमाना भास्वरं रूपं तेजोमयमिव प्रथमं गाहते 'ऋ-ॠ' इत्यत्राहि 'इ-ई' इत्यनुगमो भास्वररूप-रेफश्रुत्यनुगमश्च कथमपह्नूयताम्, यथाह भगवान्पुष्पदन्तः

'रश्रुतिसामान्याद्वा सिद्धम्'

इति। शून्ये हि निश्चले रूपे अनुप्रविविक्षायां भास्वररूपसंवित्तिसोपानाक्रमणं स्थितमेव, ततो निश्चलरूपानुप्रवेशात् पार्थिवरूपसतत्त्वनिश्चलतात्मक-लकार-श्रुत्यनुगमे 'ऌ-ॡ' इति, तथा च पर्यन्ते ईशनरूपतैव समग्रभावात्मस्वरूपोल्लङ्घनेन दीर्घतरं प्लुत्वा निश्चलां शून्यां सत्ता-

'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥'

इति।

१ एतदेव योगिनिदर्शनेन स्फुटयति शून्ये हीत्यादि।

मेतीति प्लुतत्वमेति 'लृवर्णस्य दीर्घा न सन्ति' इति न्यायात्, अवर्णादीनां तु दीर्घस्यैव दीर्घतरता प्लुतत्वं, तच्च प्राङ्नीत्या दीर्घत्वमेव पृथगपर्येषणीयम् इत्यास्तां तावत्, एतच्चतुष्कं शून्यरूपतानुप्रवेशात् दग्धबीजमिव षण्ठरूपं भण्यते न तु सर्वथा बीजरूपत्वाभावात्, बीजं[2]योन्यात्मकशिवशक्त्युभयातिरेकिणः कस्यचिदप्यभावात्, श्रीपूर्वा[3]दिशास्त्रेषु चानभिधानात् लौकिकसुखादिषु चैवंविधैव विश्रान्तिरानन्दरूपेति, तदेवामृतबीजचतुष्कमित्युक्तम्, तदेवमिच्छेशनं चानन्दवपुषि अनुत्तरपरधामनि च प्राग्भाविनि स्वरूपादप्रच्याविनि अनुप्रविश्य 'अ आ इ ई' इति च, न तु विपर्यये, यथोक्तम् 'अवर्णे इवर्णे ए' इति, अनुप्रवेशे चानुत्तरप-

---

१ आनन्दो ब्रह्मणो रूपमित्यादिनीत्येत्यर्थः ।

२ यदि हि बीजत्वं न स्यात् एषां तदा तृतीयस्य कस्यचिद्व्यपदेशः स्यात् । क्षुभ्यति क्षोभयत्यपीति बीजत्वं तन्त्रेष्वपि क्षोभोऽस्त्येव क्षोभणा तु नास्तीति सर्वथा बीजत्वाभाव इत्यर्थः ।

३ तदभावश्च कथमित्यत आह पूर्वादीति ।

दानुप्रवेशे स्यादपि कश्चिद्विशेषः, आनन्दपदानुप्रवेशे हि स्फुटता, अनुत्तरधामसंभेदे तु सूक्ष्मता तदपेक्षया, तथाहि भगवान् भुजगविभुरादिशत्

'छन्दोगानां सात्यमुग्रिराणायनीया
अर्धमेकारमर्धमोकारं चाधीयते।'

इति। लोकेऽपि प्राकृतदेशभाषादौ स्फुट एव प्रचुरो निवेशः, पारमेश्वरेष्वपि एकारौकारयोरैकारौकारापेक्षया यत् ह्रस्वत्वमङ्गवक्त्रादिविनियोगे दृश्यते तदेवमेव मन्तव्यम्—अय एकार, अव ओकाराभिप्रायेणैवम्—'ए ओ' इति बीजं स्थितम्, एतदपि तथा शबलीभूतं संविद्वपुः तथैव च तदेव रूपमनवसत् 'अ आ ए' इति 'ऐ' एवमुन्मेषेऽपि वाच्यम्—'अ आ उ ऊ' इति ओ 'अ आ ओ' इति 'औ' केवलमुन्मेषो ज्ञानशक्त्यात्मा प्रसरन् यद्यपि शून्यतावगाहनं कुर्यात् तथापि अस्येशानेच्छात्मकोभयरूपप्रवेश एव शून्यता, इच्छेशानयोस्तु स्वपरि-

वृत्तिरूपं नास्ति—इत्युक्तनयेनैव स्थितिः, एवमिच्छाज्ञाने अनुत्तरस्वरूपानुप्रवेशेन प्राप्तोपचये पश्चात् परित्यज्य तथाविधोपाधिपरिस्पन्दसत्तामभेदसत्तारोहणचिन्मयपुरुषतत्त्वसतत्त्ववेदनारूपबिन्दुमात्रावशेषेण वपुषा तथानुत्तरपदलीने 'अमिति' तथाहि औकारे एव क्रियाशक्तिपरिस्पन्दः परिसमाप्यते इति—इच्छाज्ञानयोरत्रैवान्तर्भावात्, त्रिशूलरूपत्वमस्य षडर्धशास्त्रे निरूपितम्

'.............................त्रिशूलेन चतुर्थकम् ।'

इत्य द्युद्देशेषु, बिन्दुः[1] पुनर्वेदनामात्रशेषतैव, सर्वस्य वेदनामात्राविशेषमपि विश्वं यदा स्वात्मन्येकगमनाय विसृजति स्वात्मनश्च सकाशात् त-

---

१ अत्रार्थोऽयम्

'अत्र प्रकाशमात्रं यत् स्थिते धामत्रये सति ।
उक्तं बिन्दुतया शास्त्रे शिवबिन्दुरसौ मतः ॥'

इति न्यायात् स्वभावाविशिष्टमपि यदा विश्वं स्वस्मात् स्वस्मिन्नेवैक्यगमनाय विसृजति तदा शक्तिमद्रूपप्राधान्यं पूर्णतावेशलक्षणं शांभवं तत्त्वमित्युक्तम् ।

न्निर्माणेन विसृजति स एव परमेश्वरः प्रथमं शक्तिमद्रूपप्रधानतया, इदानीं तु शाक्तविसर्गप्रधानतया 'अः' इति, औकारपर्यन्ते हि निर्भरीभूते क्रियाशक्तिप्रसरे एतावदनुप्रविष्टमनुत्तरपदस्य भैरवभट्टारकस्य स्वरूपसतत्त्वस्य इ[1]च्छा-ज्ञान-क्रियात्मकशक्तिपरिस्पन्दादिमध्यान्तभागाः उल्लिलसिषा-उल्लसत्ता-उल्लसितता-स्वभावाः सूक्ष्मतमप्रसंख्या[2]नगृहीततावद्भूमिकाधिरूढयोगिजनस्फुटलक्षणीयाः श्रीस्वच्छन्दादिप्रक्रियाशास्त्रेषु प्रबु[3]द्धप्रसरणावरणादिरूपत्वेनोक्ताः अत एव शिवदृष्टिशास्त्रे सप्तमाह्निके

---

१ इच्छाज्ञानक्रियाशक्तिनामकं त्रितयं खलु ।
परमेश्वरस्वातन्त्र्यख्यापकं कथितं परे ॥
इच्छाशक्त्याविष्यमाणं विश्वं जातं यदैव हि ।
ज्ञानशक्तिरभिव्यक्तिकारणं तस्य ब्रूमहे ॥
क्रियाशक्तिर्बाह्यरूपपरिस्फुरणकारणम् ।
एकमेव हि स्वातन्त्र्यमादिमध्यान्तभेदभाक् ॥
तेन नैषां पृथङ्नाम कदाचिदपि लभ्यते ।'

तत्र स्फुटप्रतीत्यर्थं यथा मूल एव उल्लिलसिषेत्यादि ।

२ प्रसंख्यानं समाधिः ।

३ प्रबुद्धेति इच्छा, प्रसरणेति ज्ञानं, आवरणेति क्रिया ।

'सुनिर्भरतराह्लादभरिताकाररूपिणि ।
निलीनशक्तित्रितये परात्मन्यनुभावनात् ॥'

इत्यादि

'तस्यापि शक्तिर्मृत्पिण्डघटवद्विश्वरूपताम् ।
गता........................................ ॥'

इत्यन्तं निरूप्य

'एकमेव हि तत्त्वं न संख्यातोऽतिरिक्तता ।'

इति यच्छिवतत्त्वमेव अनन्तविचित्रस्वातन्त्र्यस्फारस्फुरणशक्तिचमत्कारभरिततोपात्तभैरवभावं निर्णीतम्[1] तत्रायमेवोक्तक्रमः, संप्रदायप्रथमाह्निकेऽपि

'स यदास्ते चिदाह्लादमात्रानुभवतल्लयः ।
तदिच्छा तावती तावज्ज्ञानं तावत्क्रिया हि सा ॥

१ शिवैक्याख्यातिरूपभ्रान्तिमयसंसारावस्था यावन्नोन्मिषति तावदपि तावदस्त्येवोक्तरूपशिवता, तथा च शक्तिपञ्चकमपि तदानीमेकरूपमपि व्यवहारापेक्षया कार्यवशादस्त्येव, तथाहि परापरावस्थायां योऽहमिति सहजप्रत्यवमर्शात्मा प्रकाशः स एव परानपेक्षत्वादानन्दरूपो निर्वृतचिन्मयः स्थित एव, तदुक्तं चिदाह्लादेति पूर्णचिदानन्दमात्रेऽनुभवः

सुसूक्ष्मशक्तित्रितयसामरस्येन वर्तते ।
चिद्रूपाह्लादपरमो निर्विभागः परः सदा ॥'

इति । तथा घटम्

'घटादिग्रहकालेऽपि घटं जानाति यावसा ।
जानाति ज्ञानमत्रैव[1] निरिच्छोर्वेदनक्षतिः ॥
औन्मुख्या[2]भावतस्तस्य निवृत्तिर्निर्वृतिं विना[3] ।
द्वेष्ये प्रवर्तते नैव न च वेत्ति विना चितिम् ॥'

इति । तथा

प्रकाशनं न तु बाह्ये तत एव तत्रैव लयो यस्य स तथा, अनेन निर्वृत-चित्कथिता, इच्छाज्ञानक्रियास्तु भिन्नविषयाद्यपेक्षया स्फुटीभवन्ति, परा-वस्थायां पुनः पूर्णोऽहमित्येव प्रकाशते – तावत्प्रकाशत्वात् तदेव ज्ञानं, संरम्भरूपत्वात् सैव क्रिया, तत्स्वभावेन तदभ्युपगमादिच्छापि स्थितैवे-त्याह तादिच्छा तावतीति, तावच्च स्वरूपं क्रियेति योज्यम् । भिन्नविषया-द्यभावेऽपि अभ्युपगमप्रकाशसंरम्भाणां सर्वदा प्रकाशमयत्वेनाविचलनात् इच्छादिव्यवहारयोग्यतैवेत्युक्तं सुसूक्ष्मेति सुसूक्ष्मत्वमेषितव्याद्यविभागेन विभागापरिकल्पनात् अत एव शक्तिसामरस्यं पूर्णचिन्मात्रप्रकाशतात्म-त्वात् चिद्रूपाह्लादपरत्वं चोक्तमिति चिदभेदाख्यातिवैचित्र्यभिन्नघटदेव-दत्तात्मकवेद्यवेदकावभासनं नामरूपं पूर्वापरीभूतावयवा क्रियेत्यर्थः ।

१ अत्रैवेति क्रियायां

२ इच्छापूर्वभाग औन्मुख्यम् ।

३ विनेति – संविन्निष्ठत्वाद्विषयव्यवस्थितीनामिति ।

पं० ४ ख० पु० घटादीति पदद्वयं नास्ति, तथा निरिच्छा वेदनाक्षतिरिति पाठान्तरं च ।

'यत इच्छति तज्ज्ञातुं कर्तुं वा सेच्छया क्रिया ।
तस्याः पूर्वापरौ भागौ कल्पनीयौ पुरा हि या ॥
तत्कर्मनिर्वृतिप्राप्तिरौन्मुख्यं तद्विकासिता ।
न चौन्मुख्यप्रसङ्गेन शिवः स्थूलत्वभाक् क्वचित् ।'

इत्यादि एतदागमसर्वस्वप्राणतयैव युक्तियुक्ततया हृदयंगमीकृतं, स एष[2] परमेश्वरो विसृजति

---

१ अत्र स्फुटीकरणार्थं निदर्शनेन शिवदृष्टावौन्मुख्यं साधितम् । यथा

'गच्छतो निस्तरङ्गस्य जलस्यातितरङ्गिताम् ।
आरम्भे दृष्टिमापात्य तदौन्मुख्यं हि गम्यते ॥
व्रजतो मुष्टितां पाणेः पूर्वः कम्पस्तदेक्ष्यते ।
बोधस्य स्वात्मनिष्ठस्य रचनां प्रति निर्वृतिः ॥
तदास्था प्रविकासो यस्तदौन्मुख्यं प्रचक्षते ।
किंचिदुच्छूनता सैव महद्भिः कैश्चिदिष्यते ॥
तस्येच्छा कार्यतां याता यया सेच्छः प्रजायते ।
औन्मुख्यस्य य आभोगः स्थूलः सेच्छा व्यवस्थिता ॥'

इति ।

२ स एषेति, शक्तिविसर्गयुक्तो विश्वं निर्मिणोतीति, यथोक्तम्

'अस्यान्तर्विसिसृक्षासौ या प्रोक्ता कौलिकी परा ।
सैव क्षोभवशादेति विसर्गात्मकतां ध्रुवम् ॥'

इति । तथा

'कला सप्तदशी तस्मादमृताकाररूपिणी ।
परापरस्वस्वरूपबिन्दुगल्या विसर्पिता ॥

विश्वं, तच्च धरादिशक्त्यन्तं कादि-क्षान्तरूपम्–इति एतावती विसर्गशक्तिः 'षोडशी कला' इति गीयते

'पुरुषे षोडशकले तामाहुरमृतां कलाम् ।'

इत्येषा हि न सांख्येया नापि वैदान्तिकी दृक्, अपि तु शैव्येवं[2], विसर्गशक्तिरेव च पारमेश्वरी परमानन्दभूमिबीजम्[3], एवं हि अकारादिरूपं

प्रकाशः सर्ववस्तूनां विसर्गरहिता तु सा ।

शक्तिकुण्डलिका चैव प्राणकुण्डलिका तथा ।

विसर्गप्रान्तदेशे तु परा कुण्डलिनीति च ॥'

इति ।

१ षोडशानामपि कलानामाप्यायकारित्वात् नित्योदितत्वेन चानस्तमितत्वादमृतामिति ।

२ शैव्येवेति

'स्वात्मनः स्वात्मनि स्वात्मक्षेपे वैसर्गिकी स्थितिः ।'

इति ।

३ यदुक्तं सिद्धयोगीश्वरे मते

'सात्र कुण्डलिनी बीजं प्राणभूता चिदात्मिका ।

तज्जं ध्रुवेच्छोन्मेषाख्यं त्रिकं वर्णास्ततः पुनः ॥'

इति ।

घनतापत्त्या योनिरूपतां गृहीत्वा स्वरूपाप्रच्युतं तदेव स्वस्वरूप एव योनिरूपे संक्रामद्विसर्गपदमित्युच्यते, यथोक्तम्

'स विसर्गो महादेवि यत्र विश्रान्तिमृच्छति ।
गुरुवक्त्रं तदेवोक्तं शक्तिचक्रं तदुच्यते ॥'

इत्यादि, अकारस्यैव घनता 'कवर्गः'—कण्ठ्य[1]त्वात्, इकारस्य 'चवर्गः'—तालव्यत्वात्, उकारस्य 'पवर्गः'—औष्ठ्यत्वात्, ऋकारस्य 'टवर्गो'—मूर्धन्यत्वात्, 'ऌकारस्य तवर्गो'—दन्त्यत्वात्, 'यशौ' चवर्गस्यान्तः 'रशौ' टवर्गस्य, 'लसौ' तवर्गस्य, वकारोऽपि 'तपव-

१ यदुक्तम्

'अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकौष्ठौ च तालु च ॥'

इति । तद्यथा अकुहविसर्गाः कण्ठ्याः । इचुयशास्तालव्याः । ऋटुरषा मूर्धन्याः । ऌतुलसा दन्त्याः । उपूपध्मानीया ओष्ठ्याः । ञमनणङा नासिक्याः । एदैतौ कण्ठतालव्यौ । ओदौतौ कण्ठौष्ठ्यौ । जिह्वामूलीयमेव जिह्वामूल्यम् । अनुसारो नासिक्यः, इति ।

र्गयोः' घनता, अबोध[1]स्यामूर्तस्यापि चिन्मात्रस्यापि क्रियाशक्तिरूपतैव, सा चोक्तनीत्या शक्तिषट्कक्रमेणैवोपजायते—तेन पञ्च प्रसृताः षड्गुणिताः त्रिंशत्, षड्भिः सह षट्त्रिंशत् भवन्तीति, तदेवं शिवबीजमेव स्वातन्त्र्यात् घनीभूततया क्वचिद्वपुषि शाक्तरूपे कुसुमतया तिष्ठत् योनिरित्यभिधीयते, तदेव हि पुष्पं पूर्वोक्तनयेन ग्राह्यग्रहणग्राहककोणत्रयमयं वस्तुतः प्रसूतिपदं बीजसंमिश्रतयैव भवति—तदेव पुष्परूपत्वात्, अन्य[2]दा तु योग्यतयैव तथा[3]व्यपदेशः, तथा च तत् कुसुममेव त्रिकोणतया योनिरूपं

---

१ अबोधत्वं स्वातन्त्र्यराहित्येन यदुक्तम् 'मायोपरिमहामाया' तत्र च विज्ञानकेवलिनां स्थितिः, ते च निरुक्तया विज्ञानं बोधात्मकं केवलं स्वातन्त्र्यविरहितं रूपं, यथा च प्रत्यभिज्ञायाम्

'शुद्धबोधात्मकत्वेऽपि येषां नोत्तमकर्तृता ।
निर्मिता स्वात्मनो भिन्ना भत्रा ते कर्तृतात्ययात् ॥'

इति ।

२ अन्यदेति इदंप्रथायाम् ।

३ तथेति योनितया ।

तत्स्फुटीभूतविभक्तग्राह्यादिरूपसोमसूर्याग्निसृष्टिस्थितिसंहृति इडापिङ्गलासुषुम्नाधर्माधर्मशबलादिकोणत्रितया पारमेश्वरी भैरवी भट्टारिका मुद्रा तद्रूपयोन्याधारतया योनिरिति निर्दिष्टा, तथा च श्रीकुब्जिकामते खण्डचक्रविचारे अमुमेवार्थं प्रधानतयाधिकृत्यादिष्टम्

'मायोपरिमहामाया त्रिकोणानन्दरूपिणी ।'

इत्यादि, अत एव तथाविधबीजकुसुमैकघनभावशिवशक्तिसंघट्टः स्वयं स्वात्मनैव पूज्य इत्युपदिष्टम् श्रीत्रिकतन्त्रसारे

'शिवशक्तिसमापत्त्या शिवशक्तिघनात्मकः ।
शिवशक्तिसमापत्तित्रिकं संपूजयेत्परम् ॥'

इति । एवं च घनीभावोऽपि वैखरीरूपे यद्यपि स्फुटीभवति तथापि सर्वसर्वात्मनि परावाग्वपुषि मुख्यतयावतिष्ठते, तत्र परं कण्ठोष्ठस्थानकरणान्यपि सर्वसर्वात्मकमेव, इति विशेषः, तथाहि अन्तरपि संजल्पेत् पश्येदिति स्फुट

एवानुभवः, भेदश्च स्थानादिकृत एव—श्रुत्येकप्राणत्वात् वर्णानां, किं बहुना बालोऽपि व्युत्पाद्यमानोऽन्तः तथा[2]रूपतया विमृशति भावजातं, विपर्ययेण[3] संशयेनापि वा विमृशत्यवच्छेदं तावत्संवेदयत एव, स च वाग्विमर्शकृत एव, अत एव संवार[4]विवाराल्पप्राणमहाप्रा-

---

१ न हि दृष्टे नामानुपपत्तिरित्यर्थः ।

२ तथेति संजल्परूपतया ।

३ मिथ्याज्ञानं विपर्ययः, एकस्मिन् धर्मिणि विरुद्धनानावमर्शः संशयः ।

४ स एव प्राणो नाम वायुरूर्ध्वमाक्रामन् मूर्ध्नि प्रतिहतो निवृत्तो यदा कोष्ठमभिहन्ति कोष्ठेऽभिहन्यमाने मनाक् गलबिलस्य संवृतत्वात् संवारो वर्णधर्म उपजायते विवृतत्वाद्विवारः संवृतो गलबिले नादः, अव्यक्तश्च नादः विवृतश्वासे उपरिवर्ती तौ श्वासनादावनुप्रदानमित्याचक्षते—वर्णनिष्पत्तेरनु पश्चात् प्रदीयते इति अनुप्रदानम् । अन्ये तु ब्रुवते—अनुप्रदानमनुस्वानो घण्टानिनादवत्, यथा घण्टानिनादोऽनुस्वानमनु भवति तथा तत्र स्थानाभिघातजे ध्वनौ नादोऽनुप्रदीयते तदा नादध्वनिसंसर्गात् घोषो जायते, यदा श्वासोऽनुप्रदीयते तदा श्वासध्वनिसंसर्गादघोषः । महति वायौ महाप्राणः । अल्पे वायौ त्वल्पप्राणः । सिद्धान्तकौमुद्यां वर्णानां बाह्यत्वं साधितं, यथा—बाह्यप्रयत्ना अष्टौ इति महाभाष्ये, तद्यथा—विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण

24

णताश्वासनादानुप्रदानादियोगोऽपि च अन्तस्तथा समुचितस्वभावः स्यादेव, अन्यथा सस्थानेषु भेदायोगात् अन्तर्हितकरणशक्तयोऽपि स्युरेव—शृणोम्यश्रौषं पश्याम्यद्राक्षं संकल्पयामि समकल्पयमित्यादेरपि संकल्पस्यान्यथावैचित्र्यायोगात्, तदनया युक्त्या[1] निभालितयान्तरधिकमधिकमनुप्रविश्य परिशीलयतां संविदं, यत्र सर्वसर्वात्मकबोधैकघनकण्ठौष्ठादिधाम्नि तथाविधबोधैकघनविमर्शात्मकस्वातन्त्र्यसारमहामन्त्ररूपवर्णभट्टारक[2]निवेशः, बोधैकघनतानिर्विशे-

---

इति। तत्र विभागो यथा—ख फ छ ठ थ च ट त क प श ष सा विवाराः श्वासा अघोषाश्च। ह् य व र ल ञ म ङ ण न झ भ घ द् ध ज ब ग ड दाः संवारा नादा घोषाश्च। वर्गाणां प्रथमतृतीयपञ्चमा यरलवाश्च अल्पप्राणाः वर्गाणां द्वितीयचतुर्थौ श ष स हाश्च महाप्राणा इत्यर्थः।

१ अनुभवानुसारी तर्को युक्तिः।

२ यदुक्तं विरूपाक्षपञ्चाशिकायाम्

‘प्रत्यवमर्शात्मासौ चितिः परावाक्स्वरसवाहिनी या।
आद्यन्तप्रत्याहृतवर्णगणा सत्यहन्ता सा॥’

इति। तथेश्वरप्रत्यभिज्ञायाम्

‘अहंप्रत्यवमर्शो यः प्रकाशात्मापि वाग्वपुः।
नासौ विकल्पः····················॥’

षतायाम् इदं स्थानम्, इदं करणम्, अयं वर्ण इति कथंकारं विभागः? इति चेत्—यदेवं स्वातन्त्र्यं तथाविधे स्वात्मनि घटोऽयं, सुखमिदं, ज्ञानमिदं, ज्ञाताहम् इत्यवभासयति,

---

इत्युक्तम्। अत्र व्याप्तिः बोधैकघनताभूमिः स्थानकरणवर्णाभावमयी बोधैकरूपत्वात् निर्विकल्पावस्थावत्, या हि स्थानकरणवर्णमयी न सा बोधैकघनापि यथा विकल्पभूः, अस्ति चेयं बोधैकघना तस्मात् स्थानकरणवर्णमयी न भवतीति, पञ्चावयवास्तर्केऽभ्युपगताः,—साहचर्यनियमो व्याप्तिः, साध्यवत्तया पक्षवचनं प्रतिज्ञा, लिङ्गप्रतिपादकत्वं हेतुत्वं, स्फुटप्रतीत्यै दृष्टान्तकथनमुदाहरणम्, पक्षे साधनोपसंहारो निगमनं, पक्षे साध्योपसंहार उपनय इति।

१ अत्र सूक्ष्मबुद्धिविवेच्योऽयं भावः। तत्र प्रश्नोत्तरे इत्थम्-

'नन्वनुत्तरतानन्दौ स्वात्मना भेदवर्जितौ।
कथमेतावतीमेतां वैचित्रीं स्वात्मनि श्रितौ॥
शृणु तावदयं संविन्नाथोऽपरिमितात्मकः।
अनन्तशक्तिवैचित्र्यलयोदयकलेश्वरः॥
अस्थास्यदेकरूपेण वपुषा चेन्महेश्वरः।
महेश्वरत्वं संवित्त्वं तदत्यक्ष्यद् घटादिवत्॥
परिच्छिन्नप्रकाशत्वं जडस्य किल लक्षणम्।
जडाद्विलक्षणो बोधो यतो न परिमीयते॥'

इति। ज्ञातेति

'ज्ञेयाद्युपायसंघातनिरपेक्षैव संविदः।
स्थितिर्मोताहमस्मीति ज्ञाता शास्त्रार्थविद्यथा॥'

इति।

तस्यैवंविधचित्रतररूपावभासेन को वा कियान् वा प्रयासः, अत एव सर्वे पाषाणतरुतिर्यङ्-मनुष्यदेव रुद्रकेवलिमन्त्र तदीशतन्महेशादिका एकैव पराभट्टारिकाभूमिः सर्वसर्वात्मनैव परमेश्वररूपेणास्ते इति, तद्विचित्रस्थानादिसार्वात्म्यनिर्विशिष्टस्फुटास्फुटव्यक्ताव्यक्तादिरूपशब्दशरीरा 'मन्त्रवीर्यम्' इति गीयते, तथाहि वीणाविपञ्चीकच्छपिकामुरुजादिषु स एव स्वनोऽन्यतोऽन्यतो देशादप्युद्भवन्नेकस्थान[1] इति कथ्यते, एवं तारमध्यमन्द्रेष्वपि तत्स्थायिस्वरै-[2]कात्म्येऽपि वाच्यम्, अत एव[3] च स एव वर्णः

---

१ यदुक्तं वर्णशिक्षायाम्

'स प्राण उत्थितो नाभेरुरःकण्ठशिरोधृतः ।
मृदुमध्योत्तमैर्याति मन्द्रादिध्वनिनादताम् ॥
मन्द्रमध्यमतारैर्हि ध्वनिभिः सवनत्रये ।
शंसन्ति शास्त्रे गायत्रं त्रैष्टुभं जागतं क्रमात् ॥'

इति ।

२ यथा तारमध्यमन्द्रादिभेदेऽपि स्वर एक एव स्थायिरूपः ।

३ सर्वस्य सर्वात्मकत्वात् ।

क्वचित्प्राणिनि स्थानान्तरसमुल्लास्यपि भवति, यथा ध्वांक्षेषु ककारटकाररेफा उच्चरन्तः सर्व एवोदरपायुकण्ठतालुनिर्वर्त्या उपलभ्यन्ते अव्यक्त्वेऽपि[1] त एव तावन्तः शब्दत्वात्, शब्दस्य च मातृकातिरेकिणोऽभावात्, मातृकातिरेक्यपि अव्यक्तः शब्दोऽनुपयोगान्न संगृहीतः इत्यप्ययुक्तम्[2], अव्यक्तवर्णरूपस्यापि[3] मौरुजसामुद्रादिध्वनितस्य ह्लादपरितापकारित्वमपि अस्त्येव — इति कोऽन्योऽभिमत उपयोगः, पारमेश्वरेऽपि अव्यक्तध्वनेर्मुख्यतयैव प्रायशो मन्त्रत्वं निरूपितम् — अर्धचन्द्रादीनामेव मन्त्रव्याप्तिसारत्वेनाभिधानात्, तत्र च

१ ननु च ते हि ककाराद्या अव्यक्तत्वान्न कण्ठादिस्थानोच्चार्यकादितुल्या इत्यत आहाव्यक्तत्वेऽपीति ।

२ अथ चोपयोगे सति सर्वं सुस्थं मातृकया च सर्वथोपयोग इत्युक्त्या ध्वांक्षादिषु हि ककाराद्या विजातीयाः सन्तोऽपि अनुपयोगान्नोक्ता इति मातृकातिरेकी शब्दोऽवश्यमभ्युपगन्तव्य इति कथं त एवेति कथनमित्यत आह इत्यप्ययुक्तमिति ।

३ दण्डापूपन्यायोऽत्र बोध्यः ।

पं० ४ ग० पु० अत एव तावन्ते शब्दत्वादिति पाठः ।

'निरोधिनीमनुप्राप्तः शब्दः शुमशुमायते ।'

इत्याद्युक्तम् – घण्टाकांस्यादिध्वनीनां श्रोत्रघट्टनादीनां च नादोपदेशे निरूपणात्

'हयो हेषति यद्वच्च दान्त उद्रवतीव च ।
सिंहो गर्जति यद्वच्च उष्ट्रः सीत्कुरुते यथा ॥
तथोदीर्य पशोः प्राणानाकर्षन्ति बलाधिकाः ।
महामन्त्रप्रयोगोऽयमसाध्याकृष्टिकर्मणि ॥'

इत्युक्तं गुह्ययोगिनीतन्त्रे, तत्रोपायमात्रमेतत् । वस्तुतस्तु 'आन्तर एवासौ नादात्मा मन्त्र' इति तु कथ्यमानं भवद्भिरपि अस्माभिरपि व्यक्तवर्णमालादिमन्त्रेष्वपि न न संचारयितुं शक्यते, तस्मात् अव्यक्तो वर्णात्मैव शब्दो यथा विदूरगतोऽपि घटो घट एव इति स्थितं, स[1] च प्राणभीर्यादिभेदेन स्थानान्तरमपि अनुसरन् स एवेत्यपि स्थितम्, अत एवेदानीं सर्वभूतरुतज्ञानं यच्छेषमुनिना भगवतोपदिष्टं तद्धृदयंगमीभूतम्, अन्यथा 'शब्दार्थप्रत्ययानां य इतरेतराध्यासो

१ स चेति वर्णात्मा शब्दः ।

यच्च ध्यानधारणासमाधिसंयमेन[1] तत्प्रविभागपर्यन्तपरलाभः' स कथमस्फुटवर्णरूपत्वातिरेकिविहगादिकूजितज्ञानाय पर्यवस्येत्, यदा तु त एव वर्णा वर्णानामेव परमार्थतोऽर्थतादात्म्यलक्षणं वाचकत्वं तदा युक्त्या त एव विहगादिरुतज्ञानं भीर्यादिशब्दा अपि हि अर्थवन्त एव—जयाजयसूचकतयोपदेशात् विहगादिरुतवत्, तदभिप्रायेणैव शिक्षासूत्रकारसूत्राणि हविसर्जनीयावुरस्यावेकेषां[2] रदनमूलमेकेषाम् इत्यादीनि वाचकीभवन्ति न तु अपरथा कथंचिदपि, अत एव किंचिद्वैचित्र्यमालम्ब्यान्यत्वम् अन्यत्वं चाशङ्कमानैः विसर्जनीयाज्जिह्वा-

---

१ तत्रयमेकत्र संयम इति संयमलक्षणम् ।

२ यदुक्तम्

' हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम् ।
उरस्यं तं विजानीयात् कण्ठ्यमाहुरसंयुतम् ॥ '

इत्यादि । तथा

' कण्ठोक्तहविसर्गाणां स्वैर्भागैः स्थानमिष्यते ।
हविसर्गावुरःस्थौ हि कण्ठाधोभागजौ मतौ ॥ '

इति ।

मूलीयोपध्मानीयौ, अनुनासिकेभ्यः पञ्चयमान्[१], डकारढकारयरलवक्षकारेभ्यः तानेव लघुप्रयत्नतरान्[२] भेदेनाभिमन्य चतुःषष्टिर्वर्णा उक्ताः, अन्यत्वं[३] चात्र स्वरव्यञ्जनयोरिव ऋवर्ण-रशब्दयोः श्रीत्रिकरत्नकुलेऽपि उक्तम्

'अष्टाष्टकविभेदेन मातृका या निरूपिता ।
तदेव कुलचक्रं तु तेन व्याप्तमिदं जगत् ॥'

इति, मातृकाज्ञानभेदे विस्तरतो निरूपितमेतत्[४],

---

१ ङुं ञुं णुं नुं मुमित्येवंरूपान् ।

२ यस्योच्चारणे जिह्वाग्रोपाग्रमध्यमूलानां शैथिल्यं जायते स लघुप्रयत्नतरः इति ।

३ यदुक्तं साम्बपञ्चाशिकायां

'या सा मित्रावरुणसदनादुच्चरन्ती त्रिषष्टिं
वर्णानत्र प्रकटकरणैः प्राणसङ्गप्रसूतान् ।
तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिसंस्थां
वाचं वक्त्रे करणविशदां वैखरीं च प्रपद्ये ॥'

इति ।

४ तदुक्तम्

'इच्छा कामो विषं ज्ञानं क्रिया देवी निरञ्जनम् ।
एतत्त्रयसमावेशः शिवो भैरव उच्यते ॥

इह तु तत्प्रक्रियानभिनिवेशः—पूर्णतैकसारत्वात्, तदेवं सर्वत्रायमीदृशः संविदनुप्रवेशक्रमः पदार्थः संकल्प्यमानः साक्षात् क्रियमाणो वा मायीयासांकेतिकस्वरूपभूतशुद्धविमर्शात्मपरवाङ्मन्त्रमहामहसि तावत् प्रतिष्ठां भजते, यत्र सर्ववादिभिरविकल्पा दशा गीयते, ततश्च परममन्त्रमहापृथिव्यादौ शुद्धव्यामिश्रादिपारमार्थिकबीजपिण्डरूपकादिवर्णात्मकमेव, अन्यथा मेरुबदरजलज्वलनभावाभावघटसुखनिर्विकल्पज्ञानानि—इत्येकमेव सर्वं स्यात्, विकल्पोऽपि तत्प्रमादोत्थः तामेव सरणिमनुसरेत्, न तु प्रत्युत तत्स्वरूपं भिन्द्यात्, तथा च यदेव तदसांकेतिकं मन्त्रवपुः तदेव अन्योन्यविचित्ररूपं पश्यद्भिः सर्वज्ञैः संकेतोपायमुपास्यतया उप-

---

कामस्य पूर्णता तत्त्वं संघट्टे प्रविभाव्यते ।
विषस्य चामृतं तत्त्वं छाद्यत्वेऽणोश्च्युते सति ॥'

इति, अमृतमिति विकासदशामयमित्यर्थः ।

१ यथा—ईश्वर उवाच

'कथयामि वरारोहे यन्मया जप्यते सदा ।
अकारादिक्षकारान्ता मातृका वर्णरूपिणी ॥

दिश्यते, तत्रैव चासांकेतिके वाङ्महसि तथा खलु मायीयाः संकेताः पतन्ति यथा त एवा-मायीयासंकेतितमन्त्रतादात्म्यं प्रतिपद्यन्ते, तथा स्वरूपप्रतिपत्तिरेव हि तेषां वाचकताभावो नान्यः कश्चित्[1], अत्र स्फुटमभिज्ञानमभ्यासव-शात् असांकेतिकतामापन्ने चिरतरपूर्ववृत्तगोश-ब्दपरामर्शः, तथैव संकेतकाले गोपरामर्शोऽपि अन्यामायीयासांकेतिकपरामर्शधामन्येव निप-

चतुर्दशस्वरोपेता बिन्दुत्रयविभूषिता ।
कलामण्डलमास्थाय शक्तिरूपं महेश्वरि
ककारादिक्षकारान्ता वर्णास्तु शक्तिरूपिणः ।
व्यञ्जनत्वात्सदानन्दोच्चारणं सहते यतः ॥
उच्चारे स्वरसंभिन्नास्ततो देवि न संशयः ।
पञ्चाशद्वर्णभेदेन शब्दाख्यं वस्तु सुव्रते ॥
अकारः प्रथमं देवि क्षकारोऽन्त्यस्ततः परम् ।
अक्षमालेति विख्याता मातृकावर्णरूपिणी ॥
शब्दब्रह्मस्वरूपेयं शब्दातीतं तु जप्यते ।
शब्दातीतं परं धाम गणनारहितं सदा ॥
आत्मस्वरूपं जानीहि ईशस्तु परमेश्वरः । '

इति ।

१ अन्यथा हि वाच्येभ्यः को वाचकस्य विशेष इति तात्पर्यम् ।

तति, यावत् बालस्यापि जन्मान्तरानुसरणेऽपि चित्स्वभावस्यादौ स्थितैवासांकेतिकी सत्ता—अन्यथानवस्थानात्, एवमेव खलु संकेतग्रहणोपपत्तिः नान्यथा, इतीश्वरप्रत्यभिज्ञाटीकायामपि श्रीमदुत्पलदेवपादैर्निर्णीतम्, अत्र चानुप्रवेशयुक्तिः

'पश्यत्यन्यच्छृणोत्यन्यत्करोत्यन्यच्च जल्पति ।
चिन्तयत्यन्यदा भुङ्क्ते तत्र सांकेतिकी स्थितिः ॥'

इति भट्टारकश्रीश्रीकण्ठपादाः

'मनोऽप्यन्यत्र निक्षिप्तं चक्षुरन्यत्र पातितम्'

इत्याद्यप्यवोचन्, तद[1]प्यसांकेतिकमन्त्रवपुः स्वबीजमनुधावदनुत्तरपदपर्यवसायि भवति, तदप्यनुत्तरपदं सत्तथाविधानन्तसमुदायवैचित्र्यसंरम्भसारं विसर्गदृष्ट्या प्रसरदेव विसर्गस्यैव हकलापर्यन्ततया प्रसरात्, तस्या अपि हकारा-

१ तदिति सांकेतिकमपि, संकेतस्य हि पारमार्थिकतयाऽसंकेतिकमेवोत्पत्तिस्थानम् इति ।

ख्यशक्तिकुण्डलिन्याः[1] स्वरूपाभेदात्मकाबिन्दुस्व-
रूपधारणा — अनुत्तरपद एव संक्रमात् स्वरूप
एव विश्राम्यति, एकाक्षरसंवित्[2] किल स्वरूपत
एव देशकालकलनोपादानादिनैरपेक्ष्येणैव प्रागु-
क्तपूर्णतत्त्वतानयेन[3] झगिति विसर्गभूमौ धावति,

१ यथोक्तं देवीस्तुतौ श्रीपञ्चस्तव्यां प्रथमे स्तवे

'या मात्रा त्रपुसीलतातनुलसत्तन्तूत्थितिस्पर्धिनी ।
वाग्बीजे प्रथमे स्थिता तव सदा तां मन्महे ते वयम् ।
शक्तिः कुण्डलिनीति विश्वजननव्यापारबद्धोद्यमा
ज्ञात्वेत्थं न पुनः स्पृशन्ति जननीगर्भेऽर्भकत्वं नराः ॥'

इति । अयमत्र भावः—मात्रेत्यनुस्वानरूपा कुण्डलिन्यपि बिसतन्त्वाभा ध्येयेति, तथैव चानवधानतायां विश्वजननेति, शक्तिपातानुविद्धेन तु ज्ञातस्वरूपा मोक्षदेत्याह ज्ञात्वेत्थमिति, तथा मात्रा सूक्ष्मतमानुत्तररूपा कौलिकीशक्तियोगात् प्रसरन्ती हकाराख्येति, अथ वा तामधिष्ठाय शक्तिः कुण्डलिनी विश्वजननव्यापारबद्धोद्यमेति मन्महे ।

२ एका चासावक्षरा चासौ संविदित्येकाक्षरसंवित् कर्मधारय इति पुंवद्भावः, किलेत्यविप्रतिपत्तौ, व्यक्तिप्रतिषेधे जात्यनुगम इति न्यायेन देशकालकलनापि तन्मय्येवेति, एका सर्वव्याप्त्रीत्यर्थः ।

३ यदुक्तं पूर्णतत्त्वेति, पूर्णत्वं हि एतदेव — यद्देशकालादियोगित्वम् । यदुक्तं

न तैर्ज्ञातं तत्स्वरूपं ये त्वेवं मन्वते बुधाः ।
देशकालाद्यवच्छेदरहितं परमं पदम् ।'

इति । तथा च हरिणा

पं० १ ग० पु० स्वरूपद्वारेणेति पाठः ।
पं० ४ ग० पु० कलनोपधानेति पाठः ।

विसर्गभूमिश्लेष एव आनन्देच्छेशनोन्मेषतत्प्र-
सूतितद्वैचित्र्यक्रियाशक्तिमयानाम् आकारादी-
नां स्थितिः, स[1] एव विसर्गः स्वसत्तानान्तरी-
यकतयैव तथैवातिभरितया सत्तया प्रसरन्
द्रागित्येव हकलामयः[2] संपद्यते, हकलामयता-
संपत्तिरेव वस्तुतः कादिसत्तानन्ततत्त्वजाल-
स्थितिः, हकलैव च पुनरपि बिन्दावनुप्रविश-
न्त्यनुत्तरपद एव पर्यवस्यति – इत्येकैवाद्वयपरि-
पूर्णरूपा संवेदनसत्ताभट्टारिकेयं परा भगवती
परमेश्वरी, न त्वत्र क्रमादियोगः कश्चित्[3], तदे-

‘ दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये ।
स्वानुभूत्येकमानाय नमः शान्ताय तेजसे ॥ ’

इति । विसर्गभूमाविति शांभवविसर्गे ।

१ स एवेति – शक्तिविसर्गः ।

२ यदुक्तम्

‘ विसर्ग एवमुत्कृष्ट आश्यानत्वमुपागतः ।
हंसः प्राणो व्यञ्जनं च स्पर्शश्च परिभाष्यते ॥ ’

इति ।

३ यदुक्तं तन्त्रालोके

‘ पाकादिस्तु क्रिया कालपरिच्छेदात्क्रमोचिता ।
मतान्त्यक्षणवन्ध्यापि न पाकत्वं प्रपद्यते ’

इति । ईश्वरप्रत्यभिज्ञायाम्

तदुच्यते 'अहमिति' विपर्यये तु संहृतौ 'अह् अं' इति, द्वैधमपि च इयमेकैव वस्तुतः संवित्, एवमेष स सर्वत्र घटसुखादिप्रकाशोऽपि स्वात्मविश्रान्तिसर्वस्वभूतोऽहंभावः, यथोक्तं

'प्रकाशस्यात्मविश्रान्तिरहंभावो हि कीर्तितः ।'

इति । स च वस्तुतः सर्वात्मकः—समनन्तरनिर्णीतनीत्या, इति पराभट्टारिकानुविद्धो भैरवात्मक एव, यथोक्तं मयैव स्तोत्रे

'विश्वत्र भावपटले परिजृम्भमाण-
विच्छेदशून्यपरमार्थचमत्कृतिर्या ।
तां पूर्णवृत्त्यहमिति प्रथनस्वभावां
स्वात्मस्थितिं स्वरसतः प्रणमामि देवीम् ॥'

इति । एष एव श्रीवामनविरचिते अद्वयसंपत्तिवार्तिके उपदेशनयो बोद्धव्यः, तेन स्थितमेतत्—अकार एव सर्वाढ्यो यत्रापि हर्षघटनी-

'सक्रमत्वं च लौकिक्याः क्रियायाः कालशक्तितः ।
घटते न तु शाश्वत्याः प्राभव्याः स्यात्प्रभोरिव ॥'

इति ।

पं० १५ क० ग० पु० सर्वत्राद्य इति पाठः ।

लादौ हकाराद्या अपि वर्णाः तत्रापि तथाविधानन्तनिजपूर्वापरवर्णसमाक्षेप एव, अन्यथा तस्यैव हादेः समुदायायोगान्ते परमाक्षिप्यमाणत्वादेवान्तर्निलीना विकल्पगोचरत्वमप्राप्ताः, अत एव सर्वत्र विज्ञाने सर्वा एव देवताः सममेव समुदायं दधत्यश्चित्रां संवित्तिवृत्तिं वर्तयन्ति, तदनेनैवाशयेन कालाधिकारादावेकस्मिन्नेव प्राणे प्राणषोडशांशेऽपि वा षष्टितद्द्विगुणाद्यब्दोदयपूर्वकं मातृरुद्रलोकपालग्रहनागादीनामुदयप्रलयाश्चित्रा निरूपिताः, तत् चित्रानन्तोदयप्रलयसमय एव द्वितीयेऽपि प्राणचारादित्यकालकलितत्वमेव तत्त्वं—वस्तुतः परमार्थः, यदि परमेतावन्मात्रं मायीयाध्यवसायानध्यवसेयमिति नास्तिताभिमानकारि, परसंविदि तु तत्कालं भासते एव, अत एवैकस्यामेव ज्ञानकलनायां 'पश्यत्यन्यद्विकल्पयत्यन्यत्' इत्याद्युपदेशेन यदुक्तं देवतात्रयाधिष्ठानं तत्स-

पं० १५ ग० पु० भासत एवैकत एव इति पाठः ।

वैत्रैवानपायि, सर्वाण्येव च संवेदनानि वस्तुतोऽहमितिपरमार्थानि विमर्शमयान्येव तदेवं स्थितम् – एतद्विश्वमन्तःस्थितमानन्दशक्तिभरितो वमन् ग्रसमानश्च विसर्ग एव परमेश्वरो घनीभूय हकारात्मतां प्रतिपद्यानन्तसंयोगवैचित्र्येण क्षरूपतामप्येति, स एवैष दूत्यात्मकशाक्तयोनिसंघट्टसंमुचितवर्णात्मकक्षोभरूपानाहतनाददशाश्रयणेन मध्यमसौषुम्नपदोच्छलत्तदनन्तभावपटलात्मा विसर्गो विश्लिष्यन् ध्रुवधाम्नि अनुत्तरपद एव प्रविशति, इति प्रागपि उक्तमेतत् । अमी चाकाराद्याः स्थितिमन्तः प्राणे तुटिषोडशकादिस्थित्या एकां तुटिं संधी-

१ क्षरूपतामिति–ककार-सकार-अकार–विसर्गात्मकताम् ।

२ दूतीति

‘ योक्ता संवत्सरात्सिद्धिरिह पुंसां भयात्मनाम् ।
सा सिद्धिस्तत्त्वनिष्ठानां स्त्रीणां द्वादशभिर्दिनैः ॥
अतः सरूपां सुभगां सुरूपां भाविताशयाम् ।
आदाय योषितं कुर्याद्यजनं पूजनं हुतम् ॥
स्त्रीमुखाद्ग्राहयेदादौ स्त्रीमुखे निक्षिपेत्पुनः । ’

इति कुलप्रक्रियायाम् ।

कृत्यार्धार्धभागेन प्रलयोदययोर्बहिरपि पञ्चदशदिनात्मककालरूपतां तन्वते, इति—तिथयः कलाश्चोक्ताः, षोडश्येव च कला विसर्गात्मा विश्लिष्यन्ती, सप्तदशी कला श्रीलाद्यादिशास्त्रेषु निरूपिता

'सा तु सप्तदशी देवी हकारार्धार्धरूपिणी।'

इति। विसर्गस्य हकारार्धत्वात् ततोऽपि विश्लेषस्यार्धत्वादिति निरवयवस्यैकवर्णस्य कथमेषा विकल्पना? इति चेत्—अस्मत्पक्षे सर्वमेवानवयवं चिन्मयैकावभासनानतिरेकात्, तथापि च स्वातन्त्र्यादेव अवयवावभासेऽपि अनवयवतैवानपायिनी, तथा इहापि अस्तु को विरोधः, एवमेव वर्णोपपत्तिः, अपरथा दन्त्योष्ठ्यकण्ठ्यतालव्यादिवर्णेषु क्रमप्रसारी पवन आघ्रातकः कथं कण्ठं हत्वा ताल्वाहन्ति—इति युगपदापूरकत्वेऽपि समानकालता स्यात्, यत्र कण्ठघातोत्थं रूपं तत् तु ताल्वाहतिजं सर्वत्र संभवति, श्वासनादयोश्च पश्चात्प्रतीयमानतयानुप्रदानत्वमुच्यते,

द्विमात्रत्रिमात्रेषु च द्विकादियोगो गर्भीकृत एकद्वयादिरेव, तथैव मात्रकेऽपि अर्धमात्रादियोगः संवेद्यः, यथोक्तं भट्टनारायणेन

'प्रणवोर्ध्वार्धमात्रातोऽप्यणवे महते नमः।'

इति। इह तु पञ्चाशद्वर्णा विश्वमपि वा अक्रममेकमेव, क्वचित्तु मतादिशास्त्रेषु विसर्गविश्लेषस्यैव अनुत्तरपदसत्तालम्बनेनाष्टादशी कला इत्यभ्युपगमः। तदेवमेताः कला एव ह्लादनामात्रचित्तवृत्त्यनुभावकाः 'स्वरा' इत्युक्ताः, स्वरयन्ति[1] शब्दयन्ति सूचयन्ति चित्तं स्वं[2] च स्वरूपात्मानं रान्ति एवम् इति परप्रमातरि संक्रामयन्तो ददति स्वं च आत्मीयं कादियोनिरूपं रान्ति[3]—बहिः प्रकाशयन्तो ददति इति स्वराः, एत एव हि चित्तवृत्तिसूचका नादात्मकाः करुणाश्रृङ्गारशान्तादिकां चित्तवृत्तिमाक्रन्दनचाटुकस्तुत्या-

१ स्वृ-शब्दोपतापनयोरिति धातोः।

२ स्व-शब्दः आत्मात्मीयवचनः इति।

३ रा-दाने इत्यस्य धातो रूपम्।

दौ केवला वा योनिवर्णनिविष्टा वा तिर्यक्तद्दहर्जातादिष्वपि प्रथमत एवापतन्तः संकेतविघ्नादिनैरपेक्ष्येणैव संविदासन्नवर्तित्वात् स्वरकाक्वादिरूपतामश्नुवानाः प्रकाशयन्ति – इत्यर्थधर्मा उदात्तादय[1] उपदिष्टाः, तेषामेव चि-

---

१ उदात्तानुदात्तस्वरिताः इति। तत्र यदा सर्वाङ्गानुसारी प्रयत्नस्तीव्रो भवति तदा गात्रस्य निग्रहः कण्ठविवरस्य चाणुत्वं स्वरस्य च वायोस्तीव्रगतित्वाद्रौक्ष्यं भवति तमुदात्तमाचक्षते, यदा तु मन्दप्रयत्नो भवति तदा गात्रस्य स्रंसनं कण्ठविवरस्य महत्त्वं स्वरस्य च वायोर्मन्दगतित्वात् स्निग्धता भवति तमनुदात्तमाचक्षते, उदात्तानुदात्तस्वरितसंनिकर्षात् स्वर इत्येवं लक्षणा बाह्याः प्रयत्नाः। स्रंसनमिति शैथिल्यं स्निग्धता मृदुता कण्ठरन्ध्रस्य महत्त्वादेव शीघ्रं वायुर्निष्क्रामन् जलावयवान्न शोषयति च अतः स्वरस्य स्निग्धता भवति। कण्ठरन्ध्रस्याणुत्वादेव वायुः शनैर्निष्क्रामन् जलावयवान् शोषयतीति रूक्षता – अस्निग्धता भवति, महाभाष्ये

'आयासो दारुण्यमणुता खस्येत्युच्चैः करणानि शब्दस्य'

आयासो गात्राणां दारुण्यं दारुणता स्वरस्य रूक्षता खस्य कण्ठविवरस्य संवृतता।

'अथ नीचैः करणानि शब्दस्य अन्ववसर्गो मार्दवमुरुता खस्येति'

अन्ववसर्गो गात्राणां शिथिलता स्वरस्य मार्दवं महत्ता कण्ठविवरस्येति, अभ्यासमधिगम्यश्चासौ स्वरविशेषः षड्जादिवदिति श्रीकय्यटः। पाणिनिस्तु उच्चैरुदात्तः, नीचैरनुदात्तः, समाहारः स्वरित इत्याह।

त्तवृत्त्यनुभावकषड्जादिस्वरूपत्वात्, एवं सर्वत्र संवेदने सर्वा एवैता वैचित्र्यचर्योच्चारचतुराः शक्तय आदिक्षान्ताः समापतन्त्योऽहमहमिकया[1] अक्रममेव भासमानाः कलनामयतयैव ज्ञानक्रमसंक्रमणमेव दिश्यमानं देशमुत्थापयन्ति, अन्यथा 'मेरुपरमाण्वोरविशेषात्' इति न्यायेन गर्भीकृतदेशात्मकवैचित्र्याक्रियावैचित्र्यात्मकं क्रमरूपं[2] कालं बहिर्योजनयोल्लासयन्त्यः स्वात्मनि

---

१ यदुक्तम्

'अहमहमिका तु सा स्यात्परस्परं यो भवत्यहंकारः ॥'

इति कोशे।

२ यदाहुः—क्रमेणाक्रमेण भावानां परिच्छित्तिः कालः, न चैतन्मन्तव्यं—संविल्लग्ना एव भावा अवभासन्ते तत् कथं तदनुषक्तस्य भावजातस्य कालयोग इति परमेश्वरे एव क्रमाक्रमस्यापि अन्तर्भाव इति। ननु यद्येवं तर्हि परमेश्वरे कालयोगः स्यात्? न—इति मन्महे, कुतः तद्भासनं च देवस्य काली नाम शक्तिः यदुक्तं 'संविदेव प्रमेयेभ्यो विभक्तं रूपं गृह्णाति, अवच्छेदयोगाद्वेद्यतां यान्ती नभः ततः स्वातन्त्र्यात् मेये स्वीकारौत्सुक्येन निपतन्ती क्रियाशक्तिः, तत्र प्राच्यभागे कालाध्वा, उत्तरे तु देशाध्वेति।' यदुक्तमीश्वरप्रत्यभिज्ञायाम्

'मूर्तिवैचित्र्यतो देशक्रममाभासयत्यसौ।
क्रियावैचित्र्यनिर्भासात् कालक्रममपीश्वरः ॥'

इति।

---

पं० ८ ख० पु० रूपं कार्यमिति पाठः।

युञ्जानत्वेन ग्रसमानाः प्रोल्लाससमयेऽपि रिक्त-
रूपतया उद्योगावभाससंक्रामविलापनरूपेण

---

१ प्रोल्लाससमय इति, आदौ हि निस्तरङ्गजलधिप्रख्येऽनुत्तरात्मनि परस्मिन् विसर्गे प्रकाशैकघने प्रथममुल्लसनशीलो व्यतिरिक्तविमृश्याभावात् चिद्विमर्शपरः स्वात्ममात्रपरामर्शनतत्पराहंपरामर्शः स्फुरति स एव प्रोल्लाससमय इत्युच्यते येनास्य सर्वत्रैव स्वातन्त्र्यमुदियात्। अयं भावः — स्वस्वातन्त्र्यमाहात्म्यादेव हि अनुत्तरप्रकाशात्मा परमेश्वरः स्वं स्वरूपं गोपयित्वा प्रमाणादिदशामधिशयानः पृथग्भावजातमाभासयेत्, तद्यथा स एव परः प्रकाशः संकुचितप्रमातृभूमिकावभासनपुरःसरमुद्योगादिकलाचतुष्कमुत्थापयति, तद्यथा उद्योगोऽर्थावबिभासयिषा तत्र सत्त्वेन सदैव बहिर्मुखेन द्वादशशण्ठवर्जमकारादिविसर्गान्ताः कलास्तत्स्वभावतया प्राप्तपरिपूर्णस्वरूपेण प्रमाणात्मना सूर्येण एकैकं भावमीषत्संकुचितेन नीलसुखादिना रूपेण भासयेत् बहिः सृजेत् पूरयेत् तथात्वेनैव कंचित्कालं स्थापयेत् चर्चयेत् स्वात्मसात्कारेण संहरेदित्यर्थः। यः कश्चनार्थक्रियार्थी हि प्रमाता प्रमाणोपारूढमेवार्थजातं प्रथममालोचयेत् अनन्तरमिदमित्थम् इति विकल्पयेत् तदनु ज्ञातोऽयं मयार्थः इति संतोषाभिमानात् बहीरूपताविलापनेन स्वात्मन्येव विश्रामयेदित्यनुभवसाक्षिकोऽयमर्थः। एवमाभासनादिरूपतामापन्नस्य भावजातस्य प्रमोपारोहानन्तरं स्वेन रूपेणावभासमानस्य षोडशारबुद्धीन्द्रियादिकलाभिः प्राप्तपूर्णनिजरूपस्योच्छूनरूपतापत्त्या तद्रूपतिरस्कारात्मना विसर्गग्रासेन मन्थरस्य देहादिरूपमेयेन्दोः परिमिते प्रमातरि संजीविन्यमृतकला विसर्जनतत्तत्प्रमातृप्रमेयाद्यात्मना स्थूलेन रूपेण समुल्लास इतीदमुक्तं भवति। यत्किंचिद्भावजातं तत्तदीषत्तासमासादनपुरःसरमिन्द्रियद्वारोपारोहेण ज्ञेयता-

द्वादशात्मिकां कृशरूपतामाश्रयन्त्यः तद्गृहीतप्रमदादिगतोद्योगादिकलाचतुष्टयपरिपूर्णतयापि अङ्कुरीभूय सालसं षोडशात्मकभरितपूर्णरूपतया प्रविशन्त्योऽन्तर्बहिश्च तदमृतानन्दविश्रान्तिरूपं चमत्कारसत्तासारकलाचतुष्कं विसृजन्त्य एवंविधामेव पूर्णकृशात्मकदोलालीलां निर्विशमानाः सोमसूर्यकलाजाल¹ग्रसनवमनचतुरा अकारमेवादितया मध्ये च कादियोनिजातम-

---

मासाद्य तत्तदर्थक्रियाकारितया स्वात्ममात्रविश्रान्त्युपजनेन संविदः पूर्णतामावहतीति । यदुक्तं श्रीमदुत्पलदेवप्रभुपादैः

‘ सर्वभावमयभावमण्डलं
विश्वशक्तिमयशक्तिबर्हिषि ।
जुह्वतो मम समोऽस्ति कोऽपरो
विश्वमेधमययज्ञयाजिनः ॥ ’

इति ।

१ यदुक्तं महार्थमञ्जर्याम्

‘ सप्तदश भालनेत्रे द्वादश षोडश चान्यनेत्रयोः । ’

इति । तत्र भालनेत्रं स्वातन्त्र्यशक्तिः दक्षिणनेत्रं प्रमाणशक्तिः वामनेत्रं प्रमेयशक्तिः, अत्र पुनरयमर्थः – द्वादशमरीचिविषयः सौरो धामक्रमः, षण्ठर्णरहिता द्वादश स्वरा वर्णक्रमः, ता एव मरीचयोऽत्र प्रथमोदि-

वसाने च बिन्दुं ददती 'अहम्' इत्येषैव भगवती सृष्टिः, तदुक्तं श्रीसोमानन्दपादैर्निजविवृतौ 'अं अ इत्येषैव विकृताविकृतरूपा मातृका' इत्यादि, ते तु 'अ' इत्येतदनुत्तरमाकाराद्याश्च तिथयः, यद्वा बिन्दुरंकारः अकाराद्यास्तिथयस्तदन्तो विसर्ग इत्यपि व्याचक्षते, तदेव संवित्सतत्त्वं 'स्पन्द' इत्युपदिशन्ति, स्पन्दनं च किंचिच्चलनं स्वरूपाच्च, यदि वस्त्वन्तराक्रमणं तच्चलनमेव न किंचित्त्वं, नो चेत् चलनमेव न किंचित्, तस्मात् स्वरूप एव क्रमादिपरिहारेण चमत्कारात्मिका – उच्छलत्ता ऊर्मिरिति मत्स्योदरीति-प्रभृतिशब्दैरागमेषु निदर्शितः 'स्पन्द'

---

तनिरावरणधामसु द्वादशसु शून्यमार्गेषु पतिताः संवित्क्रमः – इति प्रकाशचक्रव्याप्तिः । आनन्दचक्रे बैन्धवामृतप्रसरेण धामक्रमः षण्ठस्वरैः सह षोडशकव्याप्त्या वर्णक्रमः, बुद्धिकर्माक्षमनःसु षोडशसु संवित्क्रम इति चानन्दचक्रव्याप्तिः । मूर्तिचक्रे स्वातन्त्र्यघननिरावरणधामसु सप्तदशसु तथा धामक्रमः आदिवर्णाधिष्ठिताकाराद्यक्षरपर्यन्तं सप्तदशधा प्रसृतो वर्णक्रमः । चान्द्र एव भूमिका बाह्यात् पराङ्मुखीभूता अन्तर्विमिमर्शयिषवोऽपि अमया सहानुभूयमानाः सप्तदशैव संवित्क्रमः इति ।

इत्युच्यते — किंचिच्चलनात्मकत्वात्, स च शिवशक्तिरूपः सामान्यविशेषात्मा, तद्व्याख्यातम्, 'आद्यास्तिथयः बिन्द्ववसानगाः कालयोगेन सोमसूर्यौ' तस्यैवं कुलस्यान्तः पृथिव्यादीनि च यावत् ब्रह्मपञ्चकं तावत्तेषां स्वराणामन्तः कथं क्रमात्। अथ च क्रमस्यादनं भक्षणं कालग्रासः तथा कृत्वेति क्रियाविशेषणं च शोभने व्रते भोगे रिक्तत्वे भोगनिवृत्तौ च पूर्णत्वे सुव्रते, आमन्त्रणमपि एतत् एवं व्याख्येयम्, एवममूला — अकारमूला अविद्यमानमूला च अनादित्वात् स क्रमो यस्याः प्रश्लेषेणातद्रूपोऽन्यथारूपोऽपि क्रमो यस्याः तथाप्यमूला अमूलस्य यदाततनमाततत् ततस्तदेव च क्रमो यस्याः, एषा चाज्ञेया ज्ञातृरूपा, एषैव च ज्ञेया — अन्यस्याभावात्, अविद्यमानं क्षान्तं तूष्णीमासनमविरतं स्पृष्ट्यादिरूपत्वेन अस्याम्, आक्षाणामैन्द्रियिकाणामन्ते समीपे प्रागपर्यवसाना या

पं० ४ ख० पु० तस्यैवाकुलस्येति पाठः

भवेदित्युपचाराराद्याक्षान्ता सृष्टिरपूर्वमाहरणं स्वात्मानुप्रवेशात्मस्वरूपं संहाररूपं यस्याम्, एषैव च शिवात्मकबीजप्रसररूपाणां मननत्राणधर्मीणां सर्वेषामेव वाच्यवाचकादिरूपवर्णभट्टारकात्मनां मन्त्राणां, शक्त्यात्मकयोनिस्पन्दानां, सर्वासां तद्बीजोद्भूतानां वेदनारूपाणां विद्यानाम् इयं समा सर्वत्रानूनाधिका सर्वेषु तन्त्रेषु तन्त्रणासु च सर्वासु क्रियासु सर्वकालं च सर्वं ददती सिद्धिसंघम् आख्याता, प्रकटाख्यातिरूपतां मायीयामुद्दिश्य भेदो वर्णानां, तथाहि — त एव शुद्धमन्त्ररूपा वर्णाः प्रथमं पञ्चविधविपर्ययशक्त्यादिरूपप्रत्ययात्मकभावसृष्टितामेत्य स्वरूपमावृण्वते,

---

१ द्विधा हि सृष्टिः — भावसृष्टिर्भूतसृष्टिश्चेति, तत्र प्रत्ययरूपा भावसृष्टिः तन्मात्ररूपा भूतसृष्टिः। तत्रेत्थं भावः

' एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः।
गुणवैषम्यविमर्दात्तस्य च भेदास्तु पञ्चाशत् ॥ '

इति भावसृष्टिः। भूतसृष्टिर्यथा

' अष्टविकल्पो दैवस्तैर्यग्योनिश्च पञ्चधा भवति।
मानुष्यश्चैकविधः समासतो भौतिकः सर्गः ॥ '

'पञ्च विपर्ययभेदा भवन्त्यशक्तिश्च करणवैकल्यात् ।
अष्टाविंशतिभेदा तुष्टिर्नवधाष्टधा सिद्धिः ॥'

इति हि एत एव प्रत्ययाः पाशवसृष्टिरूपाः पाशा मुख्यतया, यथोक्तम्

'स्वरूपावरणे चास्य शक्तयः सततोत्थिताः ।
यतः शब्दानुवेधेन न विना प्रत्ययोद्भवः ॥'

---

तत्र गुणविभागः

'ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः ।
मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तः ॥'

इति ब्राह्मप्राजापत्यैन्द्रपित्र्यगान्धर्वयाक्षराक्षसपैशाचा इत्यष्टधा दैवसर्गः। पशुमृगपक्षिसरीसृपस्थावराः पञ्चधा तिर्यग्योनिः। संस्थानस्य चतुर्ष्वपि अविशेषादेक एव मानुष्य इति।

१ अविद्यास्मितारागद्वेषाभिनिवेशास्तमोमोहमहामोहतामिस्रान्धतामिस्रसंज्ञकाः पञ्चेति, एकादशेन्द्रियवधाः सप्तदश बुद्धिवधा इत्यष्टाविंशतिः, आध्यात्मिकाश्चतस्रो बाह्याः पञ्चेति तुष्टयो नव, ऊहशब्दाध्ययनत्रिविधदुःखविघातसुहृत्प्राप्तिदानान्यष्टौ सिद्धयः। तत्राशक्तयः

'बाधिर्यं कुष्ठतान्धत्वं जडताजिघ्रता तथा ।
मूकता कौण्यपङ्गुत्वक्लैब्योदावर्तमत्तताः ॥'

इत्येकादश, एतावद्धेतुका बुद्धेरशक्तिः। स्वरूपतो बुद्धेरशक्तिविपर्ययात् तुष्टिसिद्धीनामित्युक्ता तुष्टिर्यथा प्रकृत्युपादानकालभाग्या आध्यात्मिकाः शब्दादयः पञ्चेत्युपरमा अपि पञ्च भवन्ति, उपरमश्च सेवादयो हि धनार्जनोपायाः सेवकादीन् दुःखाकुर्वन्तीति मत्वा दुःखावहकर्मणो निवर्तनम्।

इति । तथा

'परामृतरसापायस्तस्य यः प्रत्ययोद्भवः ।'

इत्यादि, एवं प्रत्ययसृष्टित्वान्तरालीकरणेन स्फुटश्रूयमाणश्रुत्यात्मकक्रमाभासमानमायीय-वर्णसृष्टिराद्यपारमार्थिकशुद्धरूपालिङ्गिता तत्त-त्कार्यफलप्रसवदायिनी निरूपिता, श्रीपूर्वशास्त्रे

'सर्वशास्त्रार्थगर्भिण्यै...................... ।'

इत्येवं-विधया

'अनया संप्रबुद्धः सन्योनिं विक्षोभ्य शक्तितः ।
तत्समानश्रुतीन्वर्णांस्तत्संख्यानसृजत्प्रभुः ॥'

इत्यादि,

'तैस्तैरालिङ्गिताः सन्तः सर्वकामफलप्रदाः ।'

इत्याद्येवमाख्याता अप्रकटा मायान्धानां, सर्व-दैव ख्याता प्रकाशा शुद्धवेदनात्मिका यस्याः सर्वत्र स्वस्वभावात्मकप्रभावप्रख्या प्रसरानिरोधो यस्या इत्यामन्त्रणम् शोभनव्रते—इति । तद-यमत्र संक्षेपार्थः

'स्वातन्त्र्यैकरसावेशचमत्कारैकलक्षणा ।
परा भगवती नित्यं भासते भैरवी स्वयम् ॥
तस्याः स्वभावयोगो यः सोऽनिरुद्धः सदोदितः
सदाशिवधरातिर्यङ्नीलपीतसुखादिभिः ॥
भासमानैः स्वस्वभावैः स्वयंप्रथनशालिभिः ।
प्रथते संविदाकारः स्वसंवेदनसारकः ॥
[1]स्वस्वसंवेदनं नाम प्रमाणमिति वर्ण्यते ।
बा[2]लतिर्यक्सर्वविदां यत्साम्येनैव भासते ॥
इन्द्रियाणि त्रिरूपं च लिङ्गं परवचःक्रमः ।
सारूप्यमन्यथायोगः प्रतीत्यनुदयो यमः ॥
इत्यादिको यस्य सर्वं द्वारमात्रे निरूप्यते ।
तत्स्वसंवेदनं प्रोक्तमविच्छेदप्रथामयम् ॥
येषां नाक्षत्रिरूपादिनाममात्रेऽप्यभिज्ञता ।
तेषामपि तिरश्चां हि समा संवित्प्रकाशते ॥

---

१ स्वस्मिन्नेव स्वेनैव संवेदनं नाम प्रकाशप्रकाशं तादृक्प्रकाशसत्तेत्यर्थः तेनात्र प्रमाणापेक्षा नापि काचिदित्यर्थः नहि स्वसंविद्रक्षितेर्थे प्रमाणापेक्षेति भावः ।

२ बालेति किंचिज्ज्ञः । तिर्यगिति मूढः ।

---

पं० ३ स्वभासायोग इति च पाठः ।

पं० १३ क० पु० येनैवाक्षेति, ग० पु० येसां वाक्षेति पाठः ।

पं० १४ ग० पु० सा सा संविदिति पाठः ।

एवं भासा स्वभावेन स्वरूपामर्शनात्मिका ।
स्वरूपामर्शनं यच्च तदेव परवाग्वपुः ॥
तद्विचित्रस्वभावत्वाद्विचित्रप्रथनामयम्
प्रथने पारतन्त्र्यं हि न जातु भजते क्वचित् ॥
अपारतन्त्र्यात्संकेतप्रत्यूहादेः कथं स्थितिः ।
अतः संकेत[2]रहितं स्वस्वरूपविमर्शनम् ॥
देशकालकलामायास्थानघातक्रियोत्तरम् ।
परिपूर्णं स्वतः सर्वं सर्वाकारविलक्षणम्[3] ॥
स्वाभाविकमहासंवित्सत्संस्कारै[4]कलक्षणम् ।
शुद्धविद्यात्मकं रूपमहमित्युभयात्मकम्[5] ॥
तदेव मातृकारूपं धरादीनां निजं वपुः ।
तत्पारमार्थिकाकारं श्रुत्याश्यानस्वरूपतः ।
बीजयोन्यात्मकं प्रोक्तं शिवशक्तिस्वरूपकम् ।
शिवशक्त्योस्तु संघट्टादन्योन्योच्छलितत्वतः ॥

---

१ स च प्रकाशो न परतन्त्रः, प्रकाश्यतैव हि पारतन्त्र्यं, प्रकाश्यता च प्रकाशान्तरापेक्षतैव, न च प्रकाशान्तरं किंचिदत्रास्ति इति स्वतन्त्र एक एव प्रकाशः, इति न तत्र विमर्शो विकल्प्यरूपोऽसांकेतिकत्वात् ।

२ उत्तमवृद्धादिना कल्पित इदमस्याभिधेयमित्येवं समयः संकेतः ।

३ स्वातन्त्र्यादेव च देशकालावच्छेदविरहात् व्यापको नित्यः सर्वाकारनिराकारस्वभाव इत्यन्यत्र ।

४ वस्तुनः सतो गुणान्तराधानं संस्कार इति भाष्ये ।

५ अहन्तयैवेदन्ताक्षेपादिति भावः ।

परस्परसमापत्तिर्जगदानन्ददायिनी ।
अन्तःस्थविश्वपर्यन्तपारमार्थिकसद्वपुः ॥
यद्वीर्यमिति निर्णीतं तद्विश्लेषणयोजना ।
विसर्ग इति तत्प्रोक्तं ध्रुवधाम तदुच्यते ।
अनुत्तरपदावाप्तौ स एष सुघटो विधिः ।
अस्मादेव तु मायीयाद्वर्णपुञ्जान्निरूपिता ॥
मायामालम्ब्य भिन्नैव श्रीपूर्वे सृष्टिराक्षरी ।
पञ्चाशद्भेदसंभिन्नप्रत्ययप्रसवात्मिका ॥
बन्धरूपा स्वभावेन स्वरूपावरणात्मिका ।
अत्रैवान्तर्गतास्तास्ताः खेचर्यो विषयात्मिकाः ।
तन्वते संसृतिं चित्रां कर्ममायाणुतामयीम् ॥

---

१ यदुक्तं देवीभावनायां पञ्चस्तवीस्तोत्रे

'मूलालवालकुहरादुदिता भवानि
निर्भिद्य षट् सरसिजानि तडिल्लतेव ।
भूयोऽपि तत्र विशसि ध्रुवमण्डलेन्दु-
निःष्यन्दमानपरमामृततोयरूपा ॥'

इति ।

२ यथा स्पन्दे

'परामृतरसापायस्तस्य यः प्रत्ययोद्भवः ।
तेनास्वतन्त्रतामेति स च तन्मात्रगोचरः ॥'

इति प्रत्ययसर्गः ।

३ अत्रेति अमायीये वर्णपुञ्जे ।

४ द्विधा हि खेचर्यादिशक्तयः ताश्च खेचरीगोचरीदिक्चरीभूचरी-रूपाः, द्विधात्वं च आसां परशक्तिपातपवित्रितानां चिदानन्दप्रसरो-

अस्याः साम्यं स्वभावेन शुद्धभैरवतामयम् ॥
प्रोक्तं प्रागेव जीवत्वं मुक्तत्वं पारमार्थिकम् ।
भिन्नाया वर्णसृष्टेश्च तदभिन्नं वपुः परम् ॥
वीर्यमित्युक्तमत्रैव यद्गुप्त्या मन्त्रगुप्तता ।
तदेतदहमित्येव विसर्गानुत्तरात्मकम् ॥
स्वस्वभावं परं जानञ्जीवन्मुक्तः सकृद्बुधः
सिद्ध्यादिप्रेप्सवस्तेन क्लृप्तसंकोचसूत्रितम् ॥
नाभिकुण्डलहृद्व्योम्नो योगिनोऽहमुपासते ।
तदेतत्किल निर्णीतं यथागुर्वागमं मनाक् ॥
एनां संविदमालम्ब्य यत्स्यात्तत्पृच्छ्यतां स्ववित् ।
नैतावतैव तुलितं मार्गांशस्तु प्रदर्शितः ॥

---

द्रमनशीलतया अकालकलितत्वादभेदसर्वकर्तृत्वपूर्णत्वव्यापकत्वस्वरूपोन्मीलनपरमार्थतयेति, मायामोहितानां तु नानन्दप्रदतयाः शून्यप्रमातृभूमिचारितयाः कालकलाशुद्धविद्यारागनियतिमयतया बन्धयितृतयेतिः। गौर्वाक् तदुपलक्षितासु संजल्पमयीषु बुद्ध्यहंकारमनोभूमिषु चरन्ति गोचर्यः शक्तिपातवतां तु शुद्धाध्यवसायाभिमानसंकल्पप्ररोहिण्यः परेषां तु विपर्यासिन्यः। दिक्षु बाह्येन्द्रियेषु दशसु चरन्तीति दिक्चर्यः अनुगृहीतानामद्वयप्रथनसाराः परेषां तु द्वयप्रतीतिपातिन्यः। भूरूपादिपञ्चकं मेयपदं तत्र चरन्तीति तदाभोगमयाश्यानीभावेन तन्मयतामापन्ना भूचर्यः प्रबुद्धानां चित्प्रकाशशरीरतया स्फुरन्त्य इतरेषां सर्वतो व्यवच्छेदतां दर्शयन्त्य इति द्विधा स्थितिः। अत्र पुनर्बन्धाभिप्रायेणैव स्थितिः, यतो 'विषयात्मिका' इत्युक्तं 'षिञ् बन्धने' इति धात्वनुसारात्।

इयतीति व्यवच्छिन्द्याद्भैरवीं संविदं हि कः ।
एतावाञ्छक्तिपातोऽयमस्मासु प्रविजृम्भितः ॥
येनाधिकारितैरेतदस्माभिः प्रकटीकृतम् ।
अस्माकमन्यमातॄणामद्य कालान्तरेऽपि वा ॥
भवत्यभूत्वा भविता तर्कः सूक्ष्मतमोऽप्यतः ।
यः सर्वयोगावयवप्रकाशेषु गभस्तिमान् ॥
श्रीपूर्वशास्त्रे निर्णीतो येन मुक्तश्च मोचकः ।
एतत्तु सर्वथा ग्राह्यं विमृश्यं च परेप्सुभिः ॥
क्षणं मर्त्यत्वसुलभां हित्वासूयां विचक्षणैः
आलोचनक्षणादूर्ध्वं यद्भवेदात्मनि स्थितिः ॥
चिदर्काभ्रलवास्तेन संशाम्यन्ते स्वतो रसात् । '

---

**परसंवेअणाभासमऊइणाऊरअरमहसो-
आइमऊइणसइभासइम अलाहि शरणि-
अपसरहु परिसरिसन जतुहसो पञ्चअप
हिलुअवर्ण परिगाहरु इर वसत्तिपलमहस्म
ओहुभितुर कदसुख विसरिपि असिद्धि
धराइम उस अल विपरिसि अभासइ वा-
हिरविहरिणी एहि विसर्गाभूमि अनादेहु-
त्तइ लर्थ ईण पवि मिणं दहुअमलाहं विह-
रिणी कुइलित्थत अणुत्तर परपइ जाश्चि अ-
भवि अतत तचमप्पइ भस्मइवि बिन्दुवि-**

सरि सुताए हुप आसत्त तअह सत्तमल हिंपुविसि विभेत विहंसः तमालि निमाइ अअह सुततस्मह भोअममण अइलं मरु निभुंऊ अपारहमरल पदुध्यो प्रन्तीप सारइ-मात द्वय भासि विगमइ विलाअनु सोश्रि अं असि तमर्थ अहिंसा अइपविमन्ती अ-लसइरसा मच्छेअरि परिदेवितरंगणि प्र-फऊ असुह सारंगिणि रितत्तस्म कीलालसा तुहि मत्तिदिविरह एणि हानुण पिज्ञति जतस्माइ लालणमहो संमअलालसा ।

---

एवमुत्तरस्याप्यनुत्तरमिति यदुक्तम् 'तन्म-योऽसावुत्तरस्य' इत्यंशेनोपात्तः कुलात्मा शाक्तः सृष्टिप्रसरः स विस्तरतो निर्णीतः, तच्चोत्तर-मपि यथानुत्तरं तथा निरूपितम्, इदानीं त्वनुत्तरमेव स्वरूपेण विस्तरतो विचारपदवीम-पेक्षते, एवं विध्यनुवादौ निर्वहतो यदि अनू-द्यमानो विधीयमानश्चांशः स्वरूपतो लक्षितौ च स्यातां यथा यदेव शिवनामस्मरणमेतदेव समस्तसौख्योच्छलनमिति द्वावप्यंशौ लक्ष्यौ,

इह तु यद्यपि अनुत्तरं नाम अन्यद्वस्तु किंचि-न्नास्ति – अन्यत्वे तस्याप्युत्तरत्वे एवाभिपातात् तथापि स्वातन्त्र्यकृतोपदेश्योपदेशकभावाभिप्रा-येणेयं व्यवस्था इत्युक्तं प्राक्, ततश्च विस्तर-तोऽनुत्तरस्वरूपनिरूपणाय ग्रन्थान्तरावतारः – तन्निरूपयति

चतुर्दशयुतं भद्रे
तिथीशान्तसमन्वितम् ॥ ९ ॥
तृतीयं ब्रह्म सुश्रोणि
हृदयं भैरवात्मनः ।
एतन्नायोगिनीजातो
नारुद्रो लभते स्फुटम् ॥ १० ॥
हृदयं देवदेवस्य
सद्यो योगविमुक्तिदम् ।
अस्योच्चारे कृते सम्यङ्-
मन्त्रमुद्रागणो महान् ॥ ११ ॥

सद्यस्तन्मुखतामेति
स्वदेहावेशलक्षणम् ।
मुहूर्तं स्मरते यस्तु
चुम्बकेनाभिमुद्रितः ॥ १२ ॥
स बध्नाति तदा सर्वं
मन्त्रमुद्रागणं नरः ।
अतीतानागतानर्थान्
पृष्टोऽसौ कथयत्यपि ॥ १३ ॥
प्रहराद्यदभिप्रेतं
देवतारूपमुच्चरन् ।
साक्षात्पश्यत्यसंदिग्ध-
माकृष्टं रुद्रशक्तिभिः ॥ १४ ॥
प्रहरद्वयमात्रेण
व्योमस्थो जायते स्मरन् ।
त्रयेण मातरः सर्वा
योगीश्वर्यो महाबलाः ॥ १५ ॥

वीरा वीरेश्वराः सिद्धा
बलवाञ्छाकिनीगणः ।
आगत्य समयं दत्त्वा
भैरवेण प्रचोदिताः ॥ १६ ॥
यच्छन्ति परमां सिद्धिं
फलं यद्वा समीहितम् ।
अनेन सिद्धाः सेत्स्यन्ति
साधयन्ति च मन्त्रिणः ॥ १७ ॥
यत्किंचिद्भैरवे तन्त्रे
सर्वमस्मात्प्रसिद्ध्यति
अदृष्टमण्डलोऽप्येवं
........................ ॥ १८ ॥

भैरवरूपस्य विश्वस्य प्रदर्शितयुक्त्यागमनिरूपितनररूपापराभट्टारिकास्वभावः शाक्तः, तस्य हृदयं सारं शिवरूपं परमेश्वर्या श्रीमत्पराभट्टारिकया समालिङ्गितं भैरवशब्देन विश्वस्य

सर्वसर्वात्मकतावपुः शक्तिरूपं तत्साहितस्यात्मनः प्रति एकस्य भेदस्य नररूपस्य एतावच्छिवात्मकं हृदयं परेणाभेदेन सर्वात्मकताया एव तेन तया च विनास्य भेदस्यैवायोगात् इत्युक्तं प्राक्। 'सुश्रोणि' इत्यामन्त्रणम्—अशोभनमायात्मकतायामपि अनपेतं शुद्धचिन्मयं यदेतत् श्रोण्यां हृदयं योनिरूपमुक्तं तन्नोऽन्तःकृतसकलमन्त्रमहेशादिभिः यत् स्थावरान्तप्रमातृजालस्याहमात्मनोऽस्माकमिति समुचितापतितव्यपदेशस्य भैरवात्म पूर्णतामयम् अन्तर्गतविश्ववीर्यसमुच्छलत्तात्मकविसर्गविश्लेषानन्दशक्त्यैकघनं ब्रह्म बृहत् व्यापकं बृंहितं च, न तु वेदान्तपाठकाङ्गीकृतकेवलशून्यवादाविदूरवर्तिब्रह्मदर्शने इव, एतच्च तृतीयं नराद्यपेक्षया शिवपरैकरूपम् अत एवामीषु शास्त्रेषु अत्र च मुख्यतया तदेव हृदयं पूज्यतयोपदिष्टम्, अननुप्रविष्टतथावीर्यव्याप्तिसारहृदया अपि तावन्मात्रबाह्याचारपरिशीलनेनैव क्रमव-

शशिथिलीभवच्छिथिलितविदलद्विदलितपाश-
वनियमबन्धना एतद्धृदयव्याप्तिं स्वयमेव सम-
धिशेरते तर्हि एतद्धृदयानुप्रवेश एव 'एतद्धृद-
येऽनुप्रविष्टोऽस्मि इयं देवी परा' इत्येतच्छा-
ब्दविकल्पकल्प्याः, अस्य च प्रत्युत हृदयान्त-
रमार्गणादित्युक्तं विस्तरतः, अपि तु

संकोचयन्ति हृदयं नहि शास्त्रपाशा
नो संविदं कलुषयेद्यदयं च लोकः ।
सम्यक्स्वभावपदवीपरिपूर्णरूपा
सैवोल्लसल्लयभरा भरिता स्थितिः स्यात् ॥

यदुक्तं मयैव स्तोत्रे

'भवद्भक्त्यावेशाद्विशदतरसंजातमनसां
क्षणेनैषावस्था स्फुटमधिवससेव हृदयम् ।'

इति । अत एव कोणेषु पूज्यास्तिस्रो, मध्ये देवी
परानन्दभैरवनिर्मथनरूपा, नित्यानन्दरसप्रसरे-
णैव क्षोभात्मकविसर्गेण—इति देवतानां संप्र-
दायो, यामलयोगे वीराणामपि आनन्देन्द्रिय-
नित्यानन्दक्षोभात्मकदूतीसंघट्टजेन—इति एक-

वीरतायामपि स्वरूपानन्दविश्रान्तियोगेन, पुंसोऽपि आनन्देन्द्रियनिःसरणधामत्रिकोणकन्दाधोविनिविष्टचित्तनिवेशात् आनन्दक्षोभप्रसवं करोति तादिन्द्रियमूलतत्पर्यन्तसंघट्टघनतायाम्, अत्रोक्तम्

'वह्नेर्विषस्य मध्ये तु……………… ।'

इति, एवमानन्दयोग एव हृदयपूजा, यथोक्तं त्रिकतन्त्रसारे

'आनन्दप्रसरः पूजा तां त्रिकोणे प्रकल्पयेत् ।
पुष्पधूपादिगन्धैस्तु स्वहृत्संतोषकारिणीम् ॥'

इति, सर्वं हि मुद्राद्वयानुविद्धं—ज्ञानक्रियाशक्तिसारत्वात्, केवलं देवतासु ज्ञानमुद्रा अन्तरुद्रिक्ता, क्रियामुद्रा बहिः, वीरेषु विपर्ययः, अनुप्रवेशस्तु समतया विपर्ययाच्च, अनेनैवाभिप्रायेण ज्ञानशक्त्यात्मके लिङ्गे क्रियाशक्तिसमर्पणमुक्तम्, एवमेतत् चतुर्दशसु युतं संश्लिष्टं पञ्चदशात्मकं तिथीशान्तेन विसर्गेण षोडशेना-

न्वितम्, यद्वा चतुर्दशसहितं युतं युग्मं षोडशतिथीनां पञ्चदशानामीशो विसर्गः तस्यान्तः सप्तदश्यनुत्तरकला तदन्वितं हृदयं – सर्वाणि घटसुखादीनि वस्तूनि तामेव बीजसत्तां परमार्थरूपेणाक्रामन्तीत्युक्तं विस्तरतः, अत एव तत् हृदयम्, एवं षोडशधा हृदयमेतत् तत्रानुत्तरानुसारेण यदेतत् ब्रह्मसामरस्यं वेद्यवेदकयोश्चतसृणां दशानामुद्योगादीनां समाहारोऽविभागभूः प्राथमिकी, तया युतमविभागि, य एते तिथीनामीशा ऊकारान्ताः तत्प्रभवत्वादन्यस्येति हि उक्तम्, तेषां तिथीशानामन्ता – अमृतवर्णाः चत्वारः तैः सम्यगन्वितम्, तच्च तृतीयं – नराद्यपेक्षया शिवरूपं परं, वेदकश्चतसृभिर्दशाभिरुल्लसन् वेद्यमेव ताभिराप्यायकौतुकात्मना ता एवामृतकलाः स्वात्मनि एकीकुर्वन् वेद्यवेदकक्षोभसमापत्त्या ऐकात्म्यलक्षण-

१ 'स्वराणां षट्कमेवेह मूलं स्याद्वर्णसंततौ ।' इत्युक्त्या ।

प्रसंख्यानेनाभ्यासेन वा गम्यं भैरवात्मना विश्वहृदयमनुत्तरं प्रविशेत् । यथोक्तम्

'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।'

इति । इच्छोल्लसत्तात्मनि आनन्दशक्तौ यदेतत् संहृत्य अनुसृत्या क्रियाशक्तिमपेक्ष्य तृतीयं रूपमिच्छात्म तदेव प्राक्कोटाविष्यमाणाद्यकलुषं[1] ब्रह्म चतुर्थे दश चत्वारिंशत् भैरवभेदापेक्षया परभैरवपरशक्तित्रयसहितानि तत्त्वानि, यथोक्तम्

'षट्त्रिंशच्छोधनीयानि शोधको भैरवः परः ।
परं[2] त्रिकं तु करणं दीक्षेयं पारमार्थिकी ॥'

---

१ प्राक्कोटौ ह्मीष्यमाणादिना कलुषम् इति कथं ब्रह्म? इत्यतः प्राच्यभागेऽकलुषमिति तात्पर्यम् ।

२ परं त्रिकमिति यथादौ निबद्धम्

'विमलकलाश्रयाभिनवसृष्टिमहा जननी
भरिततनुश्च पञ्चमुखगुप्तरुचिर्जनकः ।
तदुभययामलस्फुरितभावविसर्गमयं
हृदयमनुत्तरामृतकुलं मम संस्फुरतात् ॥'

इति । करणं शोधनोपायः ।

---

पं० ६ ग० पु० प्राक्कादाविष्यमाणेति पाठः ।

इत्यादि तैर्युतम्, आनन्दशक्तिर्हि प्रागपररूपा पूर्णा कथं तिथीशैर्बीजैः तदन्तैश्च योनिरूपधरादिभिः समन्वितम्—इति क्रियाविशेषणम्, तदेव हृदयं, सर्वत्रात्र सकृद्विभातं प्रसंख्यानगम्यं रूपं मुख्यतः तत्र, योग्यानां तु परशक्तिपातपवित्रितानां वृथैन्द्रजालिककलनालालसानां वा योगाभ्यास इति मन्तव्यम्।

इच्छाभिप्रायेण तृतीयमिच्छा, तच्च बृंहितमिष्यमाणेनाभिन्नेन पूर्णं ब्रह्म चतुर्दश चत्वारिंशद्युतानि निर्विभागभाञ्जि यतोऽन्तरं युतशब्दो विभक्तवाच्यपि युतसिद्धत्वादित्यादौ[1], तिथीश्वरस्य कुलमयानुत्तरकलात्मनोऽन्तः आनन्दः तस्यानु—पश्चात् सम्यगितं बोधमयम्।

ईशानापेक्षया तृतीयमिच्छारूपं प्रसरवशाद्बृहद्भूतमीशानतापन्नं चतुर्दशानां चत्वारिंशत

१ अयुतसिद्धयोः संबन्धः समवाय इत्यत्र युतसिद्धयोरपृथक्सिद्धयोरित्यर्थः यथामुमेवाभिप्रायमन्तःकृत्य यु-मिश्रणेऽमिश्रणे चेति सिद्धान्तकौमुद्यां पठितम्।

११ ग० पु० तिथीश्वरस्यानुत्तरेति पाठः।

उक्ताया युतं परस्परव्यामिश्रता यत्र तिथीश्वर-स्याकुलमयानुत्तरा कलनान्तः संहृतिः—कुल-शक्तिप्रथमस्पन्दस्तेनान्वितम् ।

उन्मेषात्मकज्ञानशक्तियोगेन तृतीयं ब्रह्मेशा-नमेव यदा[1] चतुर्दशानां तस्या एव तत्त्वचत्वा-रिंशतो युतं प्रथमविभागो यत्र तथाविधं भव-ति, तथा तिथीशान्तेन कुलशक्तिप्रथमस्पन्देन सम्यक् प्ररुरुक्षुतया अन्वितम्, संशब्दोऽत्र भरणापेक्षः ।

तज्ज्ञानशक्तिक्रियाशक्तिमध्यकोटिरूपप्रा-ङ्गिणीति-ऊकारकलालम्बितोढतारूढ्या यदेतत् ब्रह्म यत्किंचिच्चराचरं तदशुद्धशुद्धाशुद्धस्रष्ट्य-पेक्षया तृतीयं शुद्धस्रष्ट्यात्मकं यत् अत एव तिथीश्वरैः हृदयभूततया तदन्तैश्च कादिक्षा-न्तैः समन्वितम् ।

अथ शून्यचतुष्कानुसृत्या चतुर्णां धरादीनां दशा विनाशात्मिका विद्यते यत्र तद्व्योम तेन

---

१ ईशानस्यैव तृतीयब्रह्मतामुपपादयति यदेत्यादि ।

युतं तृतीयं ब्रह्मेच्छाख्यं तिथीश्वरस्यार्कस्य अन्तेन बाह्येन तेजसान्वितम् ।

व्याख्यातक्रमेण तृतीयं ब्रह्मेशनम् एतदपि एवमेव ।

तृतीयं ब्रह्मेच्छाख्यं चतुर्णां नभःप्रभृतीनामन्तर्दशा यत्र साधारतया समन्वितं तिथीशान्तस्य वह्नेः तेजसो यदनुसरद्रूपं तेन सहितं व्योमात्म ।

तथैव तृतीयं ब्रह्म चतुर्दशयुतं तिथीशान्तसमन्वितं परिपूर्णशून्यरूपप्लुत्या भैरवात्म ।

इच्छा खलु निजस्वभावभूतेशानसहिता वेद्यभूमेर्व्योमसत्तां यदाक्रामति तदा किंचित्प्रकाशभुवि विश्रम्य झटिति अपर्यन्तां काष्ठपाषणप्रायां निश्चलां व्योमभूमिमनुप्रविशति यत्रापवेद्यसुषुप्तमहाव्योमानुप्रविष्टान् योगिनः प्रत्युच्यते

'भेरीकांस्यनिनादोऽपि व्युत्थानाय न कल्पते ।'

इत्यादि ।

---

पं० ६ क० ग० पु० अन्तदशेति पाठः ।

अधुनोक्तव्याप्ति यदेतत्परस्पररूपसांकर्यवैचित्र्यं शक्तीनां तदुद्देशेन एवमिच्छा यदानुत्तरपदप्रवेशशालिनी भवति तदा शक्तिक्षोभस्य रसनादेरनन्तरं, तत्रोच्यते — विलम्बितमध्यद्रुतानां चिद्विशेषस्पन्दानां सत्त्वादियोगजुषां चतुःशब्दोपलक्षिता चतुर्थी दशा यत्रास्ति सामान्यस्पन्दरूपा तदकुलं तेनाकुलेन अनुत्तरेण युतं तृतीयं ब्रह्मेच्छात्म ईशनसहितं तिथीशस्याकारस्यान्तेनानन्दशक्त्यात्मना अन्वितम् ।

तदपि तथैव पुनरपि परां सत्तामनुप्रविशति यदा तदा भैरवात्म परिपूर्णं दीर्घीभूतं नः — अस्माकमिति पूर्ववत्, अत एवैतदेव बीजयुग्मम् एवंविधबीजवैचित्र्यानुप्रवेशात् आच्छादप्रसवसमर्थम् — इति कामवाक्तत्त्वोपयोगेनोच्यते ।

'कामेन कामयेत्कामान्कामं कामेषु योजयेत् ।'

इत्यादि

पं० १६ क० ग० पु० कामेन साधयेदिति पाठः ।

'ए-ओकारगतं बीजं वाग्विधानाय केवलम् ।'

इत्यादि, पञ्चमषष्ठवर्णद्वयेन यदुक्तं 'चतुर्दशयुतं तृतीयं ब्रह्म तिथीशान्तसमन्वितं' तदेव भैरवात्मानुत्तरपदानुप्रविष्टम्, एतत् ब्रह्म चत्वारिंशद्युतमुक्तनीत्या तिथीशान्तसमन्वितं भैरवात्मवेदनरूपतया बिन्द्वात्मकं हृदयम्, सकलमिदं तत्त्वजालं भैरवात्मतयोच्छलत् अत एव बहिर्विसृज्यमानं बृंहितं ब्रह्म विसर्गात्मकं बहिःस्थितं च भैरवात्मतयैकीभूतं भेदात्मकव्यवच्छेददारिद्र्यापसारणेन सर्वसर्वात्मकपदप्राप्त्या बृंहितम्—इति विसर्गपदं, निर्णीतं चैतदवधानेन ।

एवं षोडशात्मिका बीजव्याप्तिरुक्ता । योनिव्याप्तिस्तु प्रतिवर्णं प्रागेवोक्ता, वर्गीकरणाभिप्रायेण तु निरूपणीया, बाल्ययौवनस्थाविरदेहान्तरग्रहणरूपदशाचतुष्टयसमाहारमयं पाञ्चभौतिकमन्तः तिथीशान्तेन प्रवेशनिर्गमनात्मना प्राणापानरूपेण युतं तृतीयं च पुर्यष्टकात्म ब्रह्म

बृहत्त्वाच्च शून्यम्, अत्र च यत् हृदयं शक्त्यात्म, त एते सर्व एव शरीरप्राणपुर्यष्टकशून्यतुर्यशक्तिरूपा बोधात्मकशिवबीजसातिशयघनताक्रमप्राप्तक्रमिकतथाभावा बाह्यात्मभूतात्मातिवाहिकात्मान्तरात्मपरमात्मव्यपदेश्याः प्रमातारः, एतद्भैरवात्म हृदयम्, प्रवेशोपायोऽत्र—सर्वाः प्रमातृभूमीरनवच्छेदेनाक्रामेत् अन्तर्बहिष्करणत्रयोदशकं प्रकृत्या सह च चतुर्दश चत्वारिंशद्युतं द्विगुणितमशीतिः, तिथयः पञ्चदश, ईशा

---

१ सर्वाः प्रमातृभूमीरिति, यदुक्तम्

'सर्वाः शक्तीर्दर्शनस्पर्शनाद्याः
स्वे स्वे वेद्ये यौगपद्येन सम्यक् ।
क्षिप्त्वा मध्ये स्फाटिकस्तम्भभूत-
स्तिष्ठन्विश्वाधार एकोऽवभासि ॥'

इति । तथा

'बहिष्करणबुद्ध्यहंकृतिमनःसुषुम्नाश्रया-
श्चतुर्दशसु चण्डिके पथिषु येन येन व्रजेत् ।
कला शिवनिकेतनं जननि तत्र सा तादृशी
दृशोदयति दुर्लभा जगति या सुरैरप्यहो ॥'

इति ।

रुद्रा एकादश, युक्ताः कालास्त्रयः, एवं — द्वादशोत्तरशतमर्मगतस्थूलसूक्ष्मपरशाक्तस्पन्दरूपमन्त्रवीर्यविकासस्फुरीकृतविसर्गविश्लेषणसंघट्टक्षोभात्मिकां शरीरसत्तामेव भैरवरूपां परिशीलयेत्। युगपन्निवेशसंप्रदाययुक्त्या चतस्रो मधुरकषायतिक्ताम्लदशा यस्य मद्यसुरासवादेः तत् तिथी-

१ यदुक्तम्

'धीकर्माक्षगता देवीर्निषिद्धैरेव चाचरेत्।
निषिद्धं लोकविद्विष्टं................ ॥'

इति। तथा

'नित्योदिता परा शक्तिर्यद्यप्येषा तथापि च।
बाह्यचर्याविहीनस्य दुर्लभा कौलिकी स्थितिः॥'

इत्युक्तमन्यत्र।

'लौकिकालौकिकं सर्वं तेनात्र विनियोजयेत्।
निष्कम्पत्वे सकम्पस्तु कम्पं निर्ह्रासयेद्बलात्॥'

न चैतदत्र अवश्यं कार्यमिति मन्तव्यम्

'क्व मांसं क्व शिवे भक्तिः क्व मद्यं क्व शिवार्चनम्।
मद्यादिपूजानिरतैः सुदुष्प्रापो हि शंकरः॥'

इत्यादिविरोधात्, किं तर्ह्यत्र प्रतिपत्तव्यं — प्रत्यभिज्ञातस्वरूपाणां न विचिकित्सामलोऽवधेय इति।

शान्तम् उभयविसर्गात्मद्रव्यसमन्वितं तदि-न्द्रियद्वयान्तर्वर्ति कुसुमशब्दवाच्यं मलं तृतीयं ब्रह्म जगदिन्धनदाहशेषं भस्म भैरवात्म भरिताकारमाप्यायकमम्बु हृदयं च सर्वेन्द्रियान्तर्वर्तिरसाश्यानोभयरूपं, तदेतानि द्रव्याणि यथालाभं भेदमलविलापकानि, तथाहि दृश्यत एवायं क्रमः – यदियं संकोचात्मिका शङ्केव समुल्लसन्ती रूढा फलपर्यन्ता संसारबीजतरोः प्रथमाङ्कुरसूतिः, सा चाप्रबुद्धान् प्रति स्थिति-

---

' शङ्काशून्योऽपि तत्त्वज्ञो मुमुक्षोः प्रक्रियां प्रति ।
न त्यजेच्छास्त्रमर्यादां चेत्याज्ञा पारमेश्वरी ॥ '

इति स्फुटं सुरादिप्रतिषेधनात्, तस्मादत्र सर्वथा महार्थमर्ज्यैव प्रमाणम् यथा ' यत्र रुचिः ' इत्यादि ।

१ यदुक्तम्

' यथा येनाभ्युपायेन क्रमादक्रमतोऽपि वा ।
विचिकित्सा गलत्यन्तस्तथासौ यत्नवान्भवेत् ॥ '

इति ।

२ यदुक्तमत्रैव पूर्वम्

' मायीयकार्ममलमूलमुशन्ति सन्तः
संकोचनाम मलमाणवमेव भद्राः ।

मूलं तदेव भवजीर्णतरोः······

················· ॥'

इति । अत्रायं संक्षेपः – यथोक्तमनेनैव – नात्र भक्ष्याभक्ष्यशुद्ध्यशुद्धिविवेचनया वस्तुधर्मोज्झितया स्वात्मा खेदनीय इति । नहि शुद्ध्यशुद्धी वस्तुनो रूपं परमार्थतः तयोः परस्परव्यभिचारदर्शनात् ।

'धीरैरेकत्र या शुद्धिस्तत्राशुद्धिः परैः स्मृता ।
विहितत्वेऽपि दानस्य दीक्षितत्वे यथा पुनः ॥
कल्पनामात्रमेवैतत्तस्मात्सद्भिरुपेयताम् ।
न कल्पना सत्यतो वै मिथ्येयमिति निश्चयः ॥
तस्मादत्रोत्तरत्वं हि चोदनाप्रविचारणे ।
एतत्खलु ह्यसंदिग्धं वादिनः प्रतिवादिनः ॥'

इति । तत्रेत्थं विचारणा – चोदना ह्यबाध्येति मीमांसकवाक्येन कथमशुद्धमिति चेत् न, शिवचोदनाया एव बाधितत्वं युक्तिसिद्धं, यथा

'संकोचतारतम्येन पाशवं ज्ञानमीरितम् ।
विकासतारतम्येन पतिज्ञानं तु बाधकम् ॥'

इति । तथा शिवोपनिषदि

'किंचिज्ज्ञैर्या स्मृता शुद्धिः सा शुद्धिः शंभुदर्शने ।
न शुद्धिः································ ॥'

इति । उक्तं च

'यो निश्चयः पशुजनस्य जडोऽस्मि कर्म-
संपाशितोऽस्मि मलिनोऽस्मि परेरितोऽस्मि ।
इत्येतदन्यदृढनिश्चयलाभसिद्ध्या
सद्यः पतिर्भवति विश्ववपुश्चिदात्मा ॥'

इति ।

भवेत्–इति प्रबुद्धैः कल्पिता, बालान् प्रति च कल्प्यमानापि च तेषां रूढा वैचित्र्येणैव फलति, अत एव वैचित्र्यकल्पनादेव सा बहुविधधर्मादिशब्दनिर्देश्या प्रतिशास्त्रं प्रतिदेशं चान्यान्यरूपा, यथोक्तम्

'ग्लानिर्विलुण्ठिका देह.............................. ।'

इति । सेयं यदा झटिति विगलिता भवति तदा निरस्तपाशवयन्त्रणाकलङ्को भैरवहृदयानुप्रविष्टो भवति–इति सर्वथा एतदभ्यासे यतितव्यम्, श्रीतिलकशास्त्रेऽयं भावः । श्रीभर्गशिखायामपि उक्तम्

'वीरव्रतं चाभिनन्देद्यथायोगं तथाभ्यसेत् ।'

इत्यादि । श्रीसर्वाचारेऽपि

'अज्ञानाच्छङ्कते मूढस्ततः सृष्टिश्च संहृतिः ।
मन्त्रा वर्णात्मकाः सर्वे वर्णाः सर्वे शिवात्मकाः ॥

१ यथा स्पन्दे

'ग्लानिर्विलुण्ठिका देहे तस्याश्चाज्ञानतः सृतिः ।
तदुन्मेषविलुप्तं चेत्कुतः सा स्यादहेतुका ॥'

इति ।

पेयापेयं स्मृता आपो भक्ष्याभक्ष्यं तु पार्थिवम् ।
सुरूपं च विरूपं च तत्सर्वं तेज उच्यते ॥

स्पृश्यास्पृश्यौ स्मृतो वायुश्छिद्रमाकाश उच्यते ।
नैवेद्यं च निवेदी च नैवेद्यं गृह्यते च यत् ॥

सर्वं पञ्चात्मकं देवि न तेन रहितं क्वचित् ।
इच्छामुत्पादयेदात्मा कथं शङ्का विधीयते ॥'

इति । श्रीवीरावलिशास्त्रेऽपि अयमेवाभिप्रायः, उक्तं च क्रमस्तोत्रे

'सर्वार्थसंकर्षणसंयमस्य
यमस्य यन्तुर्जगतो यमाय ।
वपुर्महाग्रासविलाससक्तं
संकर्षयन्तीं प्रणमामि कालीम् ॥'

इति । व्याख्यातं चैतन्मया तट्टीकायामेव क्रमकेलौ विस्तरतः, अत एव षडर्धशास्त्रेष्वेषैव क्रिया प्रायो नियन्त्रणारहितत्वेन पूजा, तत्परिपूरणायैव सर्वद्रव्यालाभात् संवत्सरमध्ये चतुस्त्रिर्द्विःसकृद्वा पवित्रकविधिरुक्तः ।

'क्रियायाः पूरणार्थाय यागाज्ञापूरणाय च ।
चतुः सकृद्वा यः कुर्यान्न पवित्रं स निष्फलः ॥'

इति विज्ञानक्रमो विस्तरत उक्तः। जातीनां च ब्राह्मणादीनां नास्ति स्थितिः — कल्पितत्वात्, उपदेशव्यङ्गतेति तु दुर्बुद्धीन् पशून् प्रत्याययेत् — इति च भगवता मुकुटसंहितायां विस्ततो निर्णीतम्, इह तु अयत्नसिद्धमेव। गुणा इच्छाद्या निर्णीताश्चतुर्दश, स्वरेभ्य ओकार-औकारमध्यगः तिथीशान्तो विसर्गः तृतीयं ब्रह्म ष-हमध्यगम्, एतद्बीजं वस्तुतो विश्वस्य, तथाहि — यत्किंचित् सत् पार्थिवप्राकृतमायीयरूपं भासते तत् इच्छायां ज्ञाने वा क्रियायां वा पतितमपि सर्वात्मकत्वात् त्रिकरूपं परत्र शिवपदे विसृज्यते सर्वं च शिवपदात् विसृज्यते — इत्यविरतमेष एव प्रबन्धो निर्विकल्पकः, विकल्पोऽपि प्रमदारातिप्रभृतिरेवंकार्यभूत्, अत एवंकारी भवति, एवंकारी भविष्यतीति वर्तमानकालत्रयानुसंधितो भेदपरमार्थतयैव विसर्गः

---

पं० ६ ग० पु० तेभ्य ओंकार-औकारमध्यग इति, क० पु० स्वरेभ्य अंकार-औकारेति, ख० पु० स्वरेभ्य ओंकारौ मध्यगौ यस्य तिथीशान्तेति पाठः।

पं० ११ क० पु० त्रिकं रूढमिति, ग पु० त्रिकरूढमिति पाठः।

इति प्रत्युत मोक्षमयशिवभूमिरेव सदैव दैव-दग्धानां संसारभयमरुमहाटवी संपन्ना ।

जलात्स्फूर्जज्ज्वालाजटिलवडवावह्निनिवहः
सुधाधाम्नः पूर्णाद्व्ययसदनदम्भोलिर्दलना ।
विकल्पादैश्वर्यप्रसरसरणेः संसृतिदरः
कियच्चित्रं चित्रं हतविधिविकासात्प्रसरति ॥

ईश्वरप्रत्यभिज्ञायामप्युक्तम्

'सर्वो ममायं विभव इत्येवं परिजानतः ।
विश्वात्मनो विकल्पानां प्रसरेऽपि महेशता ॥'

इति । यथा चाकृतिमध्य एव चतुर्भुजत्रिनयन-पूर्णकृशाद्या आकृतयो द्रव्यमध्ये च सुरासवा-

---

१ दशम्याः पूर्णिमान्तं चन्द्रस्य पूर्णत्वं, ततश्चाशन्युद्गमः इति शास्त्रम् ।

२ नहि प्रत्यगात्मा नाम पशुरन्यः कश्चित् अन्योऽपि अहम् अपि तु परिगृहीतग्राह्यग्राहकप्रकाशघनो यः स एवाहं सचाहमेव न त्वन्यः कश्चित्, अतो विकल्पसृष्टिरपि मम स्वातन्त्र्यलक्षणो विभव इत्येवं विमर्शे दृढीभूते सत्यपरिक्षीणविकल्पोऽपि जीवन्नेव मुक्तः । यथोक्तम्

'शङ्कापि नो विशङ्क्येत निःशङ्कत्वमिदं स्फुटम् ॥'

इति ।

---

पं० ६ ग० पु० विघातादिति पाठः ।

द्या बलादेव तां सत्तां समधिशाययन्तीव लिप्यक्षराणीव सती अवर्णभूमिः—इत्युत्कर्षभागित्वमेषाम्[1], एवं सर्ववर्णमध्येऽपि अयं वर्णः[2], तथाहि—सकारस्तावत् परमानन्दामृतस्वभावं[3] उल्लसन् एव समस्तं वर्णजालमाक्षिप्य उल्लसति यद्यत्सत्यसुखसंपत्सत्तादीनां पारमार्थिकं वपुः सीत्कारसमुल्लासशोपकम्पवराङ्गसंकोचविकासोपलक्ष्यम् तदेव हि सत्यादीनाममायीयं वस्तुतो रूपं, तथाहि परहृदयग्रहणेङ्गितनिपुणा गगनगवयगवाद्यनन्तपदप्राङ्मध्यान्तभाविनोऽपि गकारादिमात्रादेवाभीष्टं चिन्वते—तावति

---

१ एषामिति चतुर्भुजादीनां लिप्यक्षराणां चेति।

२ वर्ण इति—अयमुत्कर्षभागी इति शेषः।

३ स्वभाव इति, यदुक्तम्

'कामस्य पूर्णता तत्त्वं संघट्टे प्रविभाव्यते।
विषयस्यामृतं तत्त्वं च्छाद्यत्वेऽणोश्च्युते सति॥'

इति।

---

पं० २ क० पु० क्षराण्येव परवर्णभूमिमित्युत्कर्षेति, ग० पु० क्षराणीव सत्यवर्णभूमिमिति पाठः।

पं० ८ ख० पु० सत्तादीनामिति पाठः।

सत्यपदेऽनुप्रवेशात्, एवमेकैकस्यैव वर्णस्य वास्तवं वाचकत्वम् यथोक्तम्

'शब्दार्थप्रत्ययानामितरेतराध्यासात्संकरः
तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम् ।'
(यो० सू० ३–१७)

इति, अत एव प्रायशोऽमी अकार-चकाराद्या एकवर्णात्मानो निपातविभक्त्यादयो मायापदेऽपि पारमार्थिकमिव प्रमातृपदलीनामिदन्तापराङ्मुखमसत्त्वभूतं तत्तन्निषिध्यमानसमुच्चीयमानाभिन्नरूपनिषेधसमुच्चयादिकमर्थमभिदधति, एष एव भावस्तत्रभवतो भर्तृहरेः, यदाह

---

१ तेषां शब्दार्थप्रत्ययानां यः प्रविभागः तत्र संयमात् 'त्रयमेकत्र संयम' इति पारिभाषिकसंज्ञा संयमस्य ।

२ यथात्र 'निपतन्ति परनिष्ठेष्वर्थेषु इति निपाताः' लिङ्गसंख्याकारककृतविशेषाभावात् असत्त्वं, यदुक्तमीश्वरप्रत्यभिज्ञायाम्

'नाहन्तादिपरामर्शभेदादस्यान्यतात्मनः ।
अहं मृश्यतयैवास्य सृष्टेस्तिङ्वाच्यकर्मवत् ॥'

इति । अत्र प्रकृतोपयोगार्थमुपमानोपमेययोः वैपरीत्यं कल्पनीयं, यथा प्रत्ययविकल्पसमुच्चयादिरूपनिपातासत्त्वभूतशक्तिभिः निषिध्यमानसमुच्चीयमानव्यतिरिक्तोऽर्थो नाभिधीयते, यथा अहन्तेश्वरात्मादिभिरहंमृश्यतयैव सृष्टेरव्यतिरिक्तोऽर्थोऽभिधीयते नेश्वर आत्मेत्यादि ।

'पदमाद्यं पृथक्सर्वं पदं साकाङ्क्षमित्यपि ।'[1]

इति वाक्यविचारे। तथा च वेदव्याकरणे पारमेश्वरेषु शास्त्रेषु मन्त्रदीक्षादिशब्देषु अक्षरवर्णसाम्यात् निर्वचनमुपपन्नं, तत्तु[2] न रूढं – नियतिवशादिति न लोकपर्यन्तं, तदेवं सकार ईदृशः, औकारविसर्गावपि व्याख्यातौ, तदुक्तं श्रीपूर्वशास्त्रे

'सार्णेन त्रितयं व्याप्तं त्रिशूलेन चतुर्थकम् ।
सर्वातीतं विसर्गेण परा व्याप्तिरुदाहृता[3] ॥'

इति । तथा

---

१ साकांक्षम् – इतरेतराध्यासात् ।

२ ननु च यद्येवं तत् सर्वत्राक्षरवर्णमूलत्वात् सर्वस्य सर्वत्रैवाक्षरवर्णसाम्येनैव निर्वचनं प्राप्तं तन्मूलत्वात् पदवाक्ययोः मूलं परित्यज्य शाखां गृह्णतो हि महाननर्थः स्यादित्यत आह 'तत्तु' इत्यादि, कुत इति हेतुमाह 'नियतिवशादिति' परमेश्वरेण हि सर्वं नियतिशक्त्या स्थापितं ततश्च बह्वक्षरसंहत्यास्य पदस्यायमेवार्थ इति नियम इत्यर्थः ।

३ त्रयोऽवयवा अस्याः संख्याया इति त्रितयं त्रिसंख्याकमण्डं, तच्च पार्थिवप्राकृतमायीयाभिधानं तच्च सकारवर्णेन व्याप्तं तत्पर्यन्तं सकारस्य व्याप्तिरित्यर्थः, त्रिशूलेन चतुर्थकमिति चतुर्थकं शाक्तमण्डं तच्च त्रिशूलेन – औ-बीजेन, पूर्ववत् षट्त्रिंशदुक्त्वा तदतीतमाह सर्वेति, स्पष्टम् – इयं परा दीक्षेति भावः ।

'शिष्येणापि तदा ग्राह्या यदा संतोषितो गुरुः ।
शरीरद्रव्यविज्ञानजातिकर्मगुणादिभिः ॥
भेदिता तु यदा तेन गुरुणा हृष्टचेतसा ।
तदा सिद्धिप्रदा ज्ञेया नान्यथा वीरवन्दिते ॥'

इति । अन्यत्रापि

'एकं सृष्टिमयं बीजम्[2]........................ ।'

इति । अत एवालेख्यं पुस्तके इति नियमः, श्री पूर्वशास्त्रेऽपि

'वामजङ्घान्वितो जीवः पारम्पर्यक्रमागतः ।'

इति । इहापि वक्ष्यते

'यथा न्यग्रोधबीजस्थः........................ ।'

इति । तदेतत् भैरवात्मनो हृदयं – मालिन्यपेक्षया नकारत्वात्, वस्तुतस्तु अकाराद्योगिन्याश्च

---

१ अन्यशास्त्रशिक्षया ।

२ यदुक्तम्

'एकं सृष्टिमयं बीजमेका मुद्रा च खेचरी ।
द्वावेतौ यस्य जायेते सोऽतिशान्तपदे स्थितः ॥'

इति ।

---

पं० ३ ग० पु० बोधिता इति पाठः ।

विसर्गशक्तेः जातः प्रादुर्भूतप्रमातृभावो रुद्रो रोधको द्रावकश्च पाशानां, स एव ना—पुरुषः, एतत् स्फुटं लभते, न तु अरुद्रो नापि अयोगिनीगर्भसंभवः, सद्योयोगो भैरवैकात्म्यं, स एव मोक्षो[1] निर्णीतः तं ददातीति यो लभते स एवंविधो नान्यः, यश्चैवंविधः[2] स स्फुटं लभते, एवं हृदयमेव लभते—सद्योयोगविमोक्षदमेवेति सर्वतो नियमः, मन्त्रा वर्णभट्टारका लौकिकपारमेश्वरादिरूपा मनन[3]त्राणरूपाः विकल्पसंविन्मयाः, मुद्राश्च सकलकरचरणादिकरणव्यापारमय्यः क्रियाशक्तिरूपाः तत्कृतो गणः समूहात्मपरशक्त्येकरूपः स्वस्यात्मनः प्राणपुर्यष्टकशू-

---

१ यथोक्तम्

‘ मोक्षश्च नाम नैवान्यः स्वरूपप्रथनं हि सः ।
स्वरूपं चात्मनः संवित्................ ॥ ’

इति ।

२ एवंविधो योगिनीजो रुद्रश्चेत्यर्थसिद्धम् ।

३ मनु अवबोधने, त्रैङ् पालने इति धातुभ्याम् ।

न्यादेः[1] देहस्य य आवेशः — झटिति परस्वरूपानुप्रवेशेन पारतन्त्र्यात्मकजडतातिरोधानेन स्वतन्त्रकर्तृतानुविद्धप्रमातृतोदयः, तथा स्वं स्वभावं पदार्थस्य ददातीति स्वदा, ईहा इच्छाद्या क्रियान्ता तया अवेशः तदेव लक्षणं यत्र तथा कृत्वा य उदेति सोऽस्य बीजस्योच्चारे ऊर्ध्वचरणे स्थितौ सत्याम्, अस्य अकारस्य यथैतत् तथा निर्णीतं बहुशः, सद्य इत्यनेन स् अत् इत्यनुप्रवेशः सूच्यते तन्मुखतां तत्पररूपप्राधान्यमेति, न तु पशूनामिव तद्रूपं प्रत्युत तिरोधत्ते,

---

१ यथेश्वरप्रत्यभिज्ञायाम्

'कलोद्दलितमेतच्च चित्तत्वं कर्तृतामयम् ।
अचिद्रूपस्य शून्यादेर्मितं गुणतया स्थितम् ॥
मुख्यत्वं कर्तृतायाश्च बोधस्य च चिदात्मनः ।
शून्यादौ तद्गुणे ज्ञानं तत्समावेशलक्षणम् ॥'

इति, अत्रायं भावः — मलेन संविद्भागस्य निमज्जनात् कर्तृतामयं चिद्रूपस्य तत्त्वं स्वातन्त्र्याख्यं कलाख्येन तत्त्वेनोपोद्दलितं मलेन न्यक्कृतं सदुद्दलितमिदन्तापन्नदेहादिशून्यान्तप्रमेयभागनिमग्नं यदापि परामृष्टतथाभूतवैभवनित्यत्वैश्वर्यादिधर्मसंभेदेनैवाहंभावेन शून्यादि देहान्तं विध्यते तदा तुर्येतेति ।

अत एव मुहूर्तम्—अकालकलितत्वेऽपि परकलनापेक्षया उन्मेषमात्रं, यः स्मरति—अनुसंधत्ते स एव व्याख्यातं मन्त्रमुद्रागणं संबध्नाति—स्वात्मन्येकीकरोति अद्वयतः, कथं?—चुम्बकेन[1] विश्वस्पर्शकेन शाक्तेन रूपेणाभितः सर्वतो मुद्रितं मुद्रणं कृत्वा, तुरवधारणे, य एव शाक्तस्पन्दमुद्रित एवंविधतत्त्वमयशिवरूपानुसंधायकः स एवैवं करोति न तु नरैकरूपः पाषाणादिः, यदतीतं यच्चानागतं यदनर्थरूपं प्रागन्याभावात् इतरदपि स एव कथयति—कथापर्यन्ततां नयति, असंकल्पनात्, कथं?

पृष्टः प्रश्ने ज्ञीप्सा
पृष्टं तद्यस्यास्ति स तथा।
यदेव किल ज्ञीप्सति
तत्तदेवान्तर्गतं बहिष्कुरुते ॥

यथोक्तम्

'यथेच्छाभ्यर्थितो धाता जाग्रतोऽर्थान्हृदि स्थितान्।
सोमसूर्योदयं कृत्वा संपादयति देहिनः ॥'

---

१ चुबि वक्त्रसंयोगे इति धात्वनुसारात्।

इत्यादि । एको हि असौ स्मरणोत्प्रेक्षणादावपि तावानेव वर्तमानो न स्तो भूतभविष्यती, यथोक्तं

'कालोभयापरिच्छिन्नम्....... ............... ।'

इत्यादि । प्राग्भवत एवानधिकरूपस्य पुनरिदं जानाति करोति इत्यादिसंकोचासहिष्णोः सकृद्विभातत्वम्, अत एवोक्तं 'भूताद्यपेक्षया वर्तमानकालस्य तदभावे वस्तुतोऽप्रसक्तेः अकालकलितत्वमेव वस्तुतत्त्वम्' इति हि उक्तमसकृत्, स एव तु कालशक्तिमवभासयति चित्राम् ।

'किं च जाग्रति कस्मिंश्चिद्धटिकाभिमतापि या ।
तस्यामेव प्रमातारः स्वप्नगाश्चित्रताजुषः ।
दिनप्रहरवर्षादिवैचित्र्यमपि चिन्वते ॥'

इति नीत्या प्रकृष्टो हरः संहारोऽकुलाख्यः ततोऽनन्तरमभिप्रेतं प्रेतशब्दवाच्यसदाशिवतत्त्व-

---

पं० २ ख० पु० वर्तमाने इति पाठः ।
पं० १४ ख० पु० तन्वते इत्यपि पाठान्तरम् ।

निविष्टज्ञानशक्त्याभिमुख्येन देवताया इच्छाया रूपं रूपाणां कलनम्, साक्षस्य सेन्द्रियस्य रूपस्यादनं भक्षणमतनं च सातत्यगमनं कृत्वा रोधनद्रावणरूपशक्तिभिराकृष्टः पश्यति असंदिग्धं कृत्वा, एतदुक्तं भवति—यदिदं दर्शनं नाम तत्सर्वतरङ्गप्रत्यस्तमयाख्याकुलसत्ताधिरूढस्य अनन्तमहिमस्वातन्त्र्ययोगात् इच्छाशक्तिमतः सैवेच्छा स्वान्तर्गता इष्यमाणवस्तुन ईषदस्फुटभेदावभासनरूपज्ञानशक्त्यात्मकतामेति तज्ज्ञानशक्तिविशेषस्पन्दनरूपसमस्तेन्द्रियाणां बहीरोधनम् एतदेव सातत्यगमनम्, तच्च द्रावणं तदेव भक्षणम् एते एव वमनभक्षणे दर्शनस्य सर्वप्रथैकमयत्वात् प्रथायाश्च तथाविधवैचित्र्ययोगात्, अनिश्चितोभयालम्बनत्वमपि स्थाणुपुरुषादावपि असंदिग्धमेव, एवं दुष्कृत-

---

१ अद भक्षणे, अत सातत्यगमने इति धातू।

---

पं० १ ग० पु० इच्छारूपं रूपाणां कलानामिति पाठः।

पं० ३ क० ग० पु० भक्षणं सततं च सातत्येति पाठः।

मयी परमेशशक्तिः, एवं तु असौ परापररूप-
स्मृतिशक्तिमान् भैरव इत्याह 'प्रहरद्वयेत्यादि'
एवं तु स्मरन् जायते व्योम विद्यते यत्र पुर्य-
ष्टके शून्ये च तत्प्रमातृरूपतामादधानः प्रह-
रोपलक्षितं दर्शनाख्यं रूपं यदा पुनः पुनः
परामृशति स्मरत्यपि च प्राग्वत् 'साक्षात्पश्य-
त्यसंदिग्धमाकृष्टो रुद्रशक्तिभिः' इति संबन्धः।
तावद्धि तदपि दर्शनमेव, इत्युक्तम्। एवं तु
'अपरात्मकविकल्पशक्तियुक्त' इत्युच्यते, त्रये-
णेति—पश्यन् स्मरंश्च व्योमस्थो यदा पुनरपि
पश्यति तदनेन प्रहरोपलक्षितदर्शनत्रयेण मा-
तरोऽन्तःप्रमातृमय्यः परमेशशक्तयः ताश्च प्र-
मातृत्वादेव सिद्धाः प्रमात्रन्तरविषयसिद्ध्यनपे-
क्षाः तद्रूपैकात्म्यलक्षणेन योगेनैश्वर्यं तथा गृही-
तस्वातन्त्र्यांशाः, महत्—बाह्येन्द्रियवृत्त्यपेक्षया
सर्वत्राप्रतिहतप्रसरत्वं बलं यासां ता अन्तः-
करणदीधितयः ता अपि सिद्धा एव—विश्वत्र
पा॰८ा।सनयन्त्रणानिरपेक्षतयैव सरभसप्रवृत्ति-

रूपत्वात्, वीरा—बुद्धिक्रियेन्द्रियाख्याः तेऽपि सिद्धा एव, तेषामपि चेश्वराः कादिवर्णात्मानः तेऽपि सिद्धाः, तत् कादिवर्णोद्धारोदितश्च ब्राह्म्यादिदेवतात्मा तत्तद्द्वेषरागादिचित्तवृत्तिरसमयः शक्तिसमूहः सोऽपि सिद्ध एव, अत एव बलवान्, एते सर्वे संभूय पराज्ञया—परस्य मां मानमयीम् असौ पर इति विकल्पात्मिकां सिद्धिम्, यद्वा समीहितं फलमेव 'अहं' ददति प्रयच्छन्ति, अज्ञातार्थक्रिये ज्ञातार्थक्रिये च एष क्रमेण विकल्पयोगः, किं बहुना ये मन्त्रिणोऽपरकुलान्तमन्त्रसिद्धा अपि साधयन्त्यपि च तेऽपि अनेन हृदयेन सेत्स्यन्ति जीवन्मुक्ताः—एतेन विना पारमार्थिकी सिद्धिर्न भवतीति भावः। 'यत्किंचिद्भैरवेत्यादि' तथा ये सिद्धाः साधयन्ति च ये च सेत्स्यन्ति अणिमादियोगात् तेऽपि अनेनैव योगेन, नहि एतद्धृदयानुप्रवेशं

पं० ७ ख० पु० मानमयी असाविति, ग० पु० मांसान्नमयमसाविति तथा अहंकारं ददाति इति च पाठः।

विना व्यावहारिक्यपि सिद्धिः, यतो – भैरवे विश्वात्मनि तन्त्रे क्रियाकलापे यत् किंचित् सिद्धिजातं तदत एव, एवमेष परमेश्वर एव हृदयात्मा एवंरूपतया शक्तित्रितयबृंहितसततोद्यमानसंह्रियमाणानन्तसंविदैक्यशाली परिकल्पितः सन् अदृष्टसंदर्शनमेवमख्यातिरूपमण्डं मायामलम्, अण्डं च भावानां भेदाख्यं सारं लुम्पति एवमदृष्टम्, एतद्धृदयमण्डलोऽपि चत्वार्यण्डान्येव, लोपः संकोचः तद्योगि, एवमेष विद्यामायोभयात्मा परमेश्वर एक एव चिद्घनः, यथोक्तम्

'दर्शनं तु परा देवी स्मरणं च परापरा।
विकल्पस्त्वपरा देवी त्रिकशक्तिमयः प्रभुः॥
मायाविद्ये उभे तस्य माया तु चतुरण्डिका।
विद्या स्वरूपसंवित्तिरनुग्रहमयी शिवा॥'

इति। यदि तु योगप्राधान्यं तदा श्रीपूर्वादिशास्त्रनिरूपितं पूर्वमेव व्रतादि कृत्वा 'अस्योच्चारे कृते' इत्यादि स्पष्टमेव व्याख्येयं, यतो

दृष्टकार्येषु नियतिपरतन्त्री क्रियाकलापं नियतमेवाक्षिपति, योगिनामपि हि नाडीचक्रकरणभावनासंवेदनयुक्त्या नियम एव ॥ १७ ॥

अस्येदानीं त्रिकार्थस्य यदुक्तं 'कुलात्परतरं त्रिकम्' इति सर्वोत्तरमनुत्तरत्वं, तन्निरूपयति

अदृष्टमण्डलोऽप्येवं
यः कश्चिद्वेत्ति तत्त्वतः ।
स सिद्धिभाग्भवेन्नित्यं
स योगी स च दीक्षितः ॥ १८ ॥

मण्डलं – देवताचक्रम्, अपश्यन्नपि – अप्राप्तमेलकोऽपि[1] चर्यानिशाटनहठादिना मण्डलानि शरीरनाडीचक्रानुचक्ररूपाणि योगाभ्यासेनासाक्षात्कुर्वन्नपि, त्रिशूलाब्जादिमण्डलमदृष्ट्वापि –

---

१ अत्रायमभिप्रायः – एकैका वाहदेवी अङ्केशेन स्वारस्येनैकैकस्मिन् निजनिजविषये आदिदेव्यधिष्ठानेन मेलापमापादयतीति चेन्द्रियदेवतानां द्वादशानां मेलाप इति ।

---

पं० १ ग० पु० परतन्त्रक्रियाकलारूपमिति पाठः ।

नात्र मण्डलादिदीक्षोपयोगः, एवमेव कश्चित्–परशक्तिपातानुगृहीतो वेत्ति यः 'एतज्ज्ञानमेव हि दीक्षा कान्यात्र दीक्षा' अत एव एवं जानन् विभुना भैरवभट्टारकेण दीक्षितोऽत एव स्वयं गृहीतमन्त्रश्च–इत्येतद्धृदयातिरिक्तमन्त्रविषयम्, नहि अयं मन्त्रो–हृदयमयत्वात्, मन्त्रमहेशतन्महेशारूपोत्तीर्णत्वात् अस्य, पुस्तकेष्वलेख्यमेवेदं 'हृदयमिति' परशक्तिपातानुग्रहादेव एतल्लाभस्तत्त्वत इति निर्णीतम् । तथा यः कश्चिदिति–जातिव्रतचर्यादिनैरपेक्ष्यमत्र वेदनमेव

---

१ यदुक्तम्

'स्वयंगृहीतमन्त्राश्च क्लिश्यन्ते चाल्पबुद्धयः ।
लिपिस्थितस्तु यो मन्त्रो निर्वीर्यः सोऽत्र कल्पितः ॥
संकेतबलतो नास्य पुस्तकात्प्रथते महः ।'

इति । तथा

'पुस्तकाधीतविद्या ये दीक्षासमयवर्जिताः ।
तापसाः परहिंसादिवश्या इह चरन्त्यलम् ।
न च तत्त्वं विदुस्तेन दोषभाज इति स्फुटम् ॥'

इति ।

हि प्रधानम्, स सिद्धिभाक् योगी—'योगमेकत्वमिच्छन्ति' इति, यतो—ज्ञानदानमायाक्षपणलक्षणा च तस्यैव दीक्षा¹, चकारोऽवधारणे, ततश्च सर्वतो मन्तव्यः तदाह—स एव सिद्धिभाग्योगी, स एव दीक्षितः नित्यमिति ॥१८॥

अनेन ज्ञातमात्रेण
ज्ञायते सर्वशक्तिभिः ।

सर्वाभिः देवताभिः सर्वशक्तिभिश्च सर्वज्ञैरसौ ज्ञायते एतज्जानन्नेव तैरपि यत्किंचित् ज्ञायते तदनेन ज्ञातमात्रेण ज्ञायते इति प्राग्वत्। सर्वाभिः शक्तिभिरिति करणे तृतीया ॥

---

१ यथोक्तम्

'ददाति ज्ञानसद्भावं क्षिपयत्यखिलं मलम् ।
दानक्षपणधर्मत्वाद्दीक्षेति हि प्रकीर्तिता ॥'

इति ।

---

पं० ४ क० ग० पु० मन्तव्यः स एव सिद्धिभाग्योगी दीक्षितः सिद्धिभागेव योग्येव दीक्षित एव सः, तदाह नित्यमिति इति पाठः ।

तथा

शाकिनीकुलसामान्यो
भवेद्योगं विनापि हि ॥ १९ ॥

अनेन ज्ञातमात्रेण योगमाभ्यासिकं मायीयदेहपातावाप्ततदैक्यरूपं च विनापि शाकिनीकुलस्य – विशेषस्पन्दात्मनः, सामान्यस्पन्दरूपोऽकुलरूपः शक्तिचक्रेश्वरो भवेदिति ॥ १९ ॥

किं च

अविधिज्ञो विधानज्ञो
जायते यजनं प्रति ॥ २० ॥

विधिः – क्रिया ज्ञानं तद्यस्य द्वयं नास्ति स पशुः, यथोक्तं किरणायाम्

'पशुर्नित्यो ह्यमूर्तोऽज्ञो निष्क्रियो निर्गुणः प्रभुः ।
व्यापी मायोदरान्तःस्थो भोगोपायविचिन्तकः ॥'

इति, स पशुरपि अनेन ज्ञातमात्रेण, विधानं ज्ञा च यस्य स – कर्ता ज्ञाता च विषयसंगतक-

रणं प्रति जायते, यजनं च अस्यापूर्णमपि पूर्णं भवतीति — सर्वमयत्वात् हृदयस्य ॥ २० ॥

तथाहि

कालाग्निमादितः कृत्वा
मायान्तं ब्रह्मदेहगम् ।
शिवो विश्वाद्यनन्तान्तः
परं शक्तित्रयं मतम् ॥ २१ ॥

कालाग्नेर्धरातत्त्वादिभुवनात् मायातत्त्वं यावत् ब्रह्मणः सकारस्य देहे विश्वभुवनात् विद्यातत्त्वादेरारभ्य यावत् शिवोऽनाश्रितशक्तिरूपः अनन्तस्य — अकारस्य अन्तः परं विसर्गात्मकं शक्तित्रयं तच्च परम्, उक्तं च 'सार्णेन' इत्यादि ॥ २१ ॥

तदन्तर्वर्ति यत्किंचित्-
शुद्धमार्गे व्यवस्थितम् ।

अणुर्विशुद्धमचिरा-
दैश्वरं ज्ञानमश्नुते ॥ २२ ॥

यत् किंचिद्वस्तु व्यवस्थितं[1] विचित्रावस्थं तत् हृदयबीजान्तर्वर्ति शुद्धं भवेत्, तदेव चैश्वरं ज्ञानम्, अणुः—अण्यते प्राणिति अणति नदति परिमितोच्चारात् मूर्धन्यो भगवत्प्रभावादचिरादेव प्राप्नोति[2] ॥ २२ ॥

---

१ विचित्रावस्था संजातास्येति व्यवस्थितं, तारकादित्वादितच् ।

२ नदनरूपतया मूर्धन्यो भवन् ऐश्वरं ज्ञानमचिरात् प्राप्नोति न तु

'शुद्धबोधात्मकत्वेऽपि येषां नोत्तमकर्तृता ।
निर्मिताः स्वात्मनो भिन्ना भर्त्रा ते कर्तृतात्ययात् ॥'

इत्यादिनीत्या विशुद्धबोधात्मकत्वमेव, यथा च श्रीस्पन्दसूत्रेषु

'तदा तस्मिन्महाव्योम्नि प्रलीनशशिभास्करे ।
सौषुप्तपदवन्मूढः प्रबुद्धः स्यादनावृतः ॥'

इति । अयमेव च ब्रह्मज्ञानशिवज्ञानयोरन्योन्यं भेदः, तथाहि—मायोत्तीर्णतायां हि तत्रैकत्र ब्रह्माप्तिरपरत्र च विज्ञानाकलावस्थेति सूक्ष्मबोधवतां विवेच्योऽत्रेदृशः क्रमः, अपराबोधेऽपि न कश्चिद्दोष इति ।

कथम्

तच्चोदकः शिवो ज्ञेयः
सर्वज्ञः परमेश्वरः ।
सर्वगो निर्मलः स्वच्छ-
स्तृप्तः स्वायतनः शुचिः ॥ २३ ॥

यः—तच्चोदको गुरुः स शिव एव ज्ञेयः, शिव एव तच्चोदकः, स चाज्ञेयो ज्ञातैव, स्वायतनः—स्वान् अयान् विज्ञानरूपान् भावांस्तनोतीति । सर्वं चैतद्विस्तरतो निर्णीतमेव ॥ २३ ॥

---

१ अयमत्राभिप्रायः—तस्यैश्वर्यस्य चोदको गुरुरेव शिवो ज्ञेयः विशुद्धस्वरूपतायां लब्धायां स्वातन्त्र्यलक्षणमैश्वर्यं यद्यपि अयत्नसिद्धमेव तथापि तत्र द्वयी गतिः—नियतिरागतः, यथोक्तम्

'वैष्णवाद्याः समस्तास्ते विद्यारागेण रञ्जिताः ।
न विदन्ति परं तत्त्वम्.................. ॥'

इति, तदर्थमेव चोक्तं तच्चोदक इति, तथोक्तम्

'मन्त्रत्वमेति संबोधादनन्तेशेन कल्पितात् ।'

इति, तदर्थमेव चात्र तच्चोदक इति, तेन न केवलं ज्ञानमेव स्वविमर्शलक्षणं स्वभावहेतुरित्युक्तेर्भावनाप्राधान्यं शैवशास्त्रेषु कथ्यते तत एव चोक्तं 'स्वतः शास्त्रतो गुरुत' इति 'सम्यक् ज्ञानम्' इति ।

एवं विस्तरशोऽभिधाय तात्पर्येण निगमयति[1]

यथा न्यग्रोधबीजस्थः
शक्तिरूपो महाद्रुमः ।
तथा हृदयबीजस्थं
जगदेतच्चराचरम् ॥ २४ ॥
एवं यो वेत्ति तत्त्वेन
तस्य निर्वाणगामिनी ।
दीक्षा भवत्यसंदिग्धा
तिलाज्याहुतिवर्जिता ॥ २५ ॥

इह असत्[2] तावन्न किंचित् – इत्युक्तं, विश्वं

---

१ निगमयतीति – प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि परप्रतिपत्तये पञ्चावयवास्तर्कस्य इति, तत्रावयवचतुष्कसिद्धार्थगर्भीकारेण साध्योपसंहरणं निगमनं, तेन – सिद्धमर्थं साधयति निगमयतीत्यर्थः ।

२ यथा शिवदृष्टौ

‘शशशृङ्गादिकेनापि विभोरस्ति समन्वयः ।’

इति । तथा

‘अख्यातिर्यदि न ख्याति ख्यातिरेवावशिष्यते ।
ख्यातिश्चेत्ख्यातिरूपत्वात्ख्यातिरेवावशिष्यते ॥’

च विश्वात्मकमिति, ततश्च यथा वटबीजे तत्समुचितेनैव वपुषा अङ्कुरविटपपत्रफलानि तिष्ठन्ति एवं 'विश्वमिदं हृदयान्तः' एवं परिज्ञानमेव असंदिग्धा निर्वाणदीक्षा, यथोक्तम्

'इयमेवामृतप्राप्तिरयमेवात्मनो ग्रहः ।
इयं निर्वाणदीक्षा च शिवसद्भावदायिनी ॥'

इति । अन्या अपि दीक्षा भोगान् वितरेयुरपि एतत्परिज्ञानमेव तु तत्त्वतो दीक्षेति, तत एवात्र सर्वोत्तरत्वं—कुलशास्त्रेभ्योऽपि आधिक्यात्, यथाहि तुलाङ्केषु ऊर्ध्वमूर्ध्वं परिमितेऽपि उन्नत्यवनतियोगेऽनन्तमन्तरं परिमाणस्य भवति,

---

तथा

'कः सद्भावविशेषः कुसुमाद्भवति गगनकुसुमस्य ।
यत्स्फुरणानुप्राणो लोकः स्फुरणं च सर्वसामान्यम् ॥'

इति । तथा

विश्वोन्मेषदशायां दैशिकनाथस्य यावान्प्रसरः ।
कलिलावस्थायां विश्वनिमेषेऽपि तावान्भवति ॥'

इति मयूराण्डरसन्यायोऽत्र स्फुटं सिद्ध इति बोध्यम् ।

---

पं० ११ क० पु० योगेनन्तरमन्तरमिति, ख० पु० योगे नान्तमन्तरमिति पाठः ।

एवमूर्ध्वोर्ध्वतत्त्वेषु देशकालभोगसंवेदनानाम् अनन्तमेवान्तरमिति एवमेवाधिकीभवेत् षट्त्रिंशतोऽपि अधिकं भवेदिति, यतश्च संवेदनमेव दीक्षा तत एव उक्तमेतत्संविदनुप्रविष्टो वीरो वा योगिनी वा निजपरसत्तासततोदिता मायीयबाह्यान्तःकरणरश्मिदेवताद्वादशकचक्रेश्वरपरभैरवभट्टारकात्मकनिर्णीततत्त्वाहंरूपानुगृहीतेन कृतदीक्षादाविति, एवमनुत्तरपदमुत्तररूपापरित्यागेनैव यथा भवति तथा व्याससमासाभ्यां भूयसा निर्णीतम्, अधुना तु इदं वक्तव्यमुच्यते तावत्सर्वशास्त्रेषु

> 'मनुष्यदेहमास्थाय च्छन्नास्ते परमेश्वराः ।
> निर्वीर्यमपि ये हार्दं त्रिकार्थं समुपासते ॥'

इति, तत्कथमस्योपासा, तथापि चानुत्तरसत्तयात्रापि भाव्यम् अनुत्तरत्वादेव, सा च कथम्? इत्याकाङ्क्षां निर्णिनीषुर्ग्रन्थान्तरमवतारयति

मूर्ध्नि वक्त्रे च हृदये
गुह्ये मूर्तौ तथैव च ।

न्यासं कृत्वा शिखां बद्ध्वा
सप्तविंशतिमन्त्रिताम् ॥ २६ ॥
एकैकं तु दिशां बन्धं
दशानामपि योजयेत् ।
तालत्रयं पुरा दत्त्वा
सशब्दं विघ्नशान्तये ॥ २७ ॥
शिखासंख्याभिजप्तेन
तोयेनाभ्युक्षयेत्ततः ।
पुष्पादिकं क्रमात्सर्वं
लिङ्गे वा स्थण्डिलेऽथ वा ॥२८॥
चतुर्दशाभिजप्तेन
पुष्पेणासनकल्पना ।
तत्र सृष्टिं यजेद्वीरः
पुनरेवासनं ततः ॥ २९ ॥
सृष्टिं तु संपुटीकृत्य
पश्चाद्यजनमारभेत् ।

---

पं० ७ ग० पु० शिखासप्ताभिजप्तेनेति पाठः ।

सर्वतत्त्वसुसंपूर्णां
सर्वाभरणभूषिताम् ॥ ३० ॥
यजेद्देवीं महेशानीं
सप्तविंशतिमन्त्रिताम् ।
ततः सुगन्धिपुष्पैस्तु
यथाशक्त्या समर्चयेत् ॥ ३१ ॥
पूजयेत्परया भक्त्या
आत्मानं च निवेदयेत् ।
एवं यजनमाख्यात-
मग्निकार्येऽप्ययं विधिः ॥ ३२ ॥

मूर्धादीनि बाह्यतयोचितरूपाणि, वस्तुतः परंब्रह्मरूपाभिहितपञ्चात्मकव्योमादिधरण्यन्त-सतत्त्वेशानादिसारचिदुन्मेषेच्छाज्ञानक्रियारूपाण्येव – मन्त्रलिङ्गात्, यथा मन्त्राः

'१ ईशानमूर्ध्ने, २ तत्पुरुषवक्त्राय, ३ अघोरहृदयाय, ४ वामदेवगुह्याय, ५ सद्योजातमूर्तये'

इति, तत्रैतत्पञ्चकाविभागात्मकमुपक्रमोपसंहारयोः रूपमिति द्वे, मध्ये च प्रोल्लसति विभागत्वे पञ्चानामेकैकशः पञ्चात्मकता—इति पञ्चविंशतिः। अत्रैव मालिन्यादिमन्त्राणामनुप्रवेशः। तिस्रश्च देव्यः प्रत्येकमिच्छादित्रययोगात् नवात्मतां प्राप्ताः पुनरपि सृष्टिस्थितिसंहृतिवशात् त्रैधमापन्ना इति सप्तविंशतिसंस्मृतहृद्बीजेन, शिखाया—एवंरूपधरण्यन्तपरिकल्पनस्वातन्त्र्यरूपायाः परचिद्बुद्धिस्पर्शप्राणब्रह्मरन्ध्रवाहरूपैरुपचर्यमाणायाः, बन्धनं—सर्वाविभागसारं तादात्म्यम्, मूर्धादिषु केवलेष्वपि प्रत्येकं सर्वाणि वक्त्रादीनि परस्परं विशेषणानि, तच्च निर्णीतमेव सर्वसर्वात्मकत्वनिर्णयेनैव, दिश्यमाना घटाद्या एव दिशः ताश्च स्वापेक्षया दशैव भवन्ति, तत्रापि एतदेव बन्धनम्—आत्मसाक्षात्कारात्मकम्, एतच्च तालत्रयेण, ताला प्रतिष्ठाविश्रान्तिः, तत्र सकारादि हृदयमेव, तच्च

पं० २ क० ग० पु० प्रोल्लसितविभागत्वे इति पाठः।

सशब्दं मध्यमान्तं, शब्दनं हि शब्दः, तच्च मध्यमैव—वैखर्याः तच्छेषात्मकत्वात्—इत्युक्तं बहुशः। एषा च विघ्नानाम्—अभेदात्मनि अखण्डिते परमात्मनि खण्डनात्मकसंकोचसारभेदकल्लोलकलङ्कानां, शान्तिः—अभेदभैरवार्णवतादात्म्यमेव, यदाहुः श्रीसोमानन्दपादाः

'अस्मद्रूपसमाविष्टः स्वात्मनात्मनिवारणे।
शिवः करोतु परया नमः शक्त्या ततात्मने ॥'

इति। एवमेव सप्तविंशतिजप्तं तोयमित्यर्घपात्रविधिः, तोयमत्र सर्वमेव हृदयद्रवात्म—अनियन्त्रितत्वात् असंकोचदानाच्च, पुष्पं व्याख्यातम्, लिङ्गं च

'…………………यत्र लीनं चराचरम्।'

इत्येतदपि निर्णीतमेव, विश्वात्मनि तत्त्वे आसि-क्रियायामधिकरणस्य कर्तुश्च आसनस्य स्वातन्त्र्यात् कल्प्यमानस्य, स्वातन्त्र्येण कल्प्य-

पं० ८ ग० पु० करोतु निजयेति पाठः।
पं० ११ क० पु० असंकोचाधानादिति पाठः।

मानत्वं चतुर्दशेन औकारेण—तस्यैव त्रिशूल-रूपत्वात् इत्युक्तमेव । सृष्टिः—आदिक्षान्तता-दात्म्यमयं हृदयं, शक्तिर्गुह्यमिति वीरत्वम् अत एव आसनमपि सर्वं तत्रैव—आधाराधेययोः परस्परैकरूपत्वात् यथोक्तम्

'सर्वभूतस्थमात्मानम्……………………।'

इत्यादि—संपुटीकरणसृष्टेरादिक्षान्तायाः प्रत्ये-कं सर्वशश्च हृदयबीजेन परतत्त्व एवोल्लासात् संहाराच्च, न चानवस्थेत्युक्तमेव, सृष्टेश्च संपुटी-करणमुभयसंघट्टक्षोभानन्दरूपं, तदुत्थद्रव्योप-योगोऽपि, क्त्वा अत्र शब्दप्रतीतिपौर्वापर्यमात्रे, सर्वतत्त्वैः सुष्ठु अभेदेन सम्यगनपायितया पू-र्णत्वं, सर्वत्र च परमाणावपि यदा समन्तात् भरणं—सर्वात्मीकरणं सर्वैर्वा घटसुखतिर्यङ्नर-विरिञ्चिविष्णुरुद्रमन्त्रसदाशिवादिप्रमातृरूपैः अ-वयवमानैरहमेकरससावयवित्वं निर्णीतमेव, अत एव विशिष्टाकृत्यायुधादिध्यानमत्र नोक्तम्—तस्य निर्मेयत्वात्, आरुरुक्षुरेतावत्त्रिकार्थाभिला-

षुकश्च कथमारोहतु? इति चेत् – कस्यायमर्थिभावो, मा तर्हि आरुक्षत् सिद्धातन्त्रादिविधिमेव, तदाशयेनैव निरूपिततद्ध्यानादिसंकोचमालम्बताम्, असंकोचितानुत्तरपदे हि अनधिकृत एव, एष एव सदोदितो योगः, गन्धपुष्पादि निर्णीतम्, यथा-शब्दः सहार्थे, तृतीया च तत्रैवोक्ता, परयैव हृदयरूपया पूजयेत्, कथं? भक्त्या – तादात्म्यानुप्रवेशप्रह्वतात्मना, भक्त्या स्वयं-कॢप्तेन पूज्यपूजकविभागेन, पूज्यो हि स्वयं सृज्यते, स परं स्वतन्त्रचिन्मयतापरमार्थ एव – अनुत्तरस्वातन्त्र्यबलात् न घटादिरिव जड इति विशेषोऽत्र, तदुक्तं श्रीप्रत्यभिज्ञायाम्

'स्वातन्त्र्यामुक्तमात्मानं स्वातन्त्र्याद्द्वयात्मनः ।
प्रभुरीशादिसंकल्पैर्निर्माय व्यवहारयेत् ॥'

इति । भक्त्या च लक्षणया पूजनेन परं तत्त्वं लक्ष्यते – सर्वक्रियास्वेवंरूपताप्रत्यभिज्ञानमुपायत्वात् लिप्यक्षरस्येव मायीयवर्णव्युत्पत्तौ, तस्यापि च वर्णवीर्यानुप्रवेश इवात्मानं निवेदये-

त् — अन्यस्य निवेद्यस्याभावात्, एवं च आत्मानमेव निःशेषेण निरुत्तरपदं वेदयेत् — अनुत्तरसत्तानुसारेण, अत्र संभावनायां लिङ् — सततमेवंमयत्वेनैवावस्थितेः इति हि उक्तम्, उपासानुसारेण तु नियोगादावपि। एवम् आ — समन्तात् सर्वत्र सदा यत् ख्यातं 'पारमार्थिकशुद्धशिवस्वरूपप्रथात्मिका ख्यातिः', तदेव यजनं परभैरवसंविद्देवतायाः पूजनात् तया च तादात्म्यसम्यग्गमनरूपताकरणात् सर्वत्र च परिमितात्मीयात्मरूपस्वत्वनिवृत्त्या परिपूर्णचिद्घनशिवशक्त्यात्मकात्मीयरूपपरस्वत्वापादनात्मकात् दानाच्च, एतदेव अग्निकार्यं — सर्ववासनाबीजानां सर्वपदार्थेन्धनग्रासलाम्पट्यजाज्वल्यमाने शिवसंघट्टक्षोभक्षुभितपरशक्त्यरणिसततसमुदितपरभैरवमहामहसि सर्वाभिष्वङ्गरूपमहास्नेहाज्यप्राज्यप्रतापे हवनात् अन्तर्दाहात्, अयमेव अग्निकार्ये विधिर्दीक्षापर्यन्तोऽपि, नान्यः पृथक् कश्चित् — इति तात्पर्यम्।

'स्वस्वरूपपरिज्ञानं मन्त्रोऽयं पारमार्थिकः ।
दीक्षेयमेष योगश्च क्रियायामप्यनुत्तरः ॥'

अत एव प्रागेवोक्तम्[1] – यथान्यत्र मन्त्रोपासादिक्रियोत्तरेण ज्ञानग्रन्थेनोत्तीर्यते नैवमिहेति, यदुक्तम् 'उत्तरस्याप्यनुत्तरम्' इति सूत्रे तदेवैतदन्तेन ग्रन्थेन निर्व्यूढं – हृदयस्यैव यागदीक्षाक्रियारूपत्वात्[2] तस्य चानुत्तरत्वात् । श्रीसोमानन्दपादैस्तु स्रुक्स्रुवसंस्कारादि[3] सर्वंसहत्वप्रतिपादनेनापि अखण्डितत्वाभिप्रायेण निरूपितम्, एवमादौ अङ्गहृच्छेदधूलि[4]भेदाद्यपि तद्रूपं युज्यते न किंचिदत्र, नाप्युपपद्यते नाप्यस्ति नाप्यधरशास्त्रपातित्वेन तदुपजीवकत्वम्, इति निर्णीतप्रायमेव ॥

---

१ उत्तरस्याप्यनुत्तरमित्यस्य व्याख्याने प्रागेवोक्तमेतत् ।

२ द्वन्द्वान्ते श्रूयमाणः शब्दः प्रत्येकमभिसंबध्यते इति रूपत्वशब्दस्य प्रत्येकमत्र संबन्धः ।

३ शिवशक्तिरूपौ हि स्रुक्स्रुवौ परस्परौन्मुख्येन स्थापनीयाविति बाह्येऽपि क्रमः ।

४ चूर्णिकादिभेदो न्यासरूपः ।

किमेवमुपासायां भवति? इत्यवतरति

कृतपूजाविधिः सम्यक्-
स्मरन्बीजं प्रसिद्ध्यति ।

एवमनवरतं व्यवहारेष्वपि बीजं स्मरन्नेव—स्मरणादेव कृतपूजाविधिः, प्रकर्षेणान्यकुलशास्त्रादिशैववैष्णवान्तशास्त्रातिरेकेणैव भगवद्भैरवभट्टारकरूपसमाविष्टः निजपरसंविच्चमत्कारवशानिर्मितभावक्रीडाडम्बरो जीवन्मुक्त एव प्रथमोक्तनयेन भवति इत्यनुभव एवायमावर्तते न त्वन्यत् किंचिदिति 'स्मरणम्' उक्तम्। श्रीमतशास्त्रेष्वेवमेव, उपासकस्त्वननुप्रविष्टवीर्यसत्तासारहृदयोऽपि क्रमपूजामाहात्म्यात् बीजं सम्यक् स्मरन् प्राप्तहृदयाख्यतत्त्वमन्त्रवीर्यः प्रकर्षेण सिद्ध्यति—क्रमपूजामाहात्म्यादेव तारतम्यातिशयात् स्वयं वा प्रसन्नगुरुभट्टारकवदन-

पं० ११ क० ग० पु० वीर्यः सत्तासारेति पाठः।

कमलाद्वा मन्त्रवीर्यं हृदयात्मकमासादयति जीवन्मुक्तश्च भवतीति यावत् । अत्र द्वारपरिवारगुरुपूजनं गुणं खण्डनां वा न वहति[1] तत एव भट्टपादैः न्यरूपि । अत्र तु कुलपर्वाणि[2] पवित्रं चेति सम्यक्त्वं पूजाविधेः

'यत्रान्तरखिलं भाति यच्च सर्वत्र भासते ।
स्फुरत्तैव हि सा ह्येका हृदयं परमं बुधाः ॥

१ अत्र देहलीदीपन्यायेन नशब्दो योजनीयस्तेन न गुणमावहति न वा खण्डनामावहतीत्यर्थः ।

२ पूरणाद्विधेः पर्व, तच्च षोढा — सामान्यं सामान्यसामान्यं सामान्यविशेषो विशेषसामान्यं विशेषो विशेषविशेष इति, एतच्चान्यत्र विस्तरतो निरूपितम् । तद्विधिः यथादृष्टमण्डलोऽपि पर्वदिनानि पूजयन् वर्षादेव पुत्रकोक्तं फलमेति विना संध्यानुष्ठानादिभिरिति, तथा पवित्रकविधिः विधिपूर्वकः परमेश्वराज्ञापूरकश्च, यथोक्तम् विना पवित्रकेण सर्वं निष्फलमिति, तत्र कालपरिच्छेदोऽन्यत्रान्वेष्यः, तद्विधिर्यथा सुवर्णमुक्तारत्नविरचितात् प्रभृति पट्टसूत्रकार्पासकुशान्तमपि कुर्यात्, तच्च तत्त्वसंख्याग्रन्थिकं, सति विभवे मासि मासि पवित्रकम् अथवा चतुर्षु मासेषु सकृद्वा, तदकरणे प्रायश्चित्तं जपेत, ज्ञान्यपि संभवद्वित्तोऽप्यकरणे प्रत्यवैति ज्ञाननिन्दापत्तिश्च ।

पं० १ क० पु० हृदयंगममासादयतीति पाठः ।

रासभी वडवा वापि स्वं जगज्जन्मधाम यत् ।
समकालं विकास्यैव संकोच्य हृदि हृष्यति ॥
तथोभयमहानन्दसौषुम्नहृदयान्तरे ।
स्पन्दमानमुपासीत हृदयं सृष्टिलक्षणम् ॥
ध्यायन्स्मरन्प्रविमृशन्कुर्वन्वा यत्र कुत्रचित् ।
विश्रान्तिमेति यस्माच्च प्रोल्लसेद्धृदयं तु तत् ॥
तदेकमेव यत्रैतज्ज्ञानं वैकल्पिकं परम् ।
तत्त्वानि भुवनाभोगाः शिवादिपशुमातरः ॥
स्वं स्वं विचित्रं विन्दन्तः स्वरूपं पारमार्थिकम् ।
चित्रीकुर्वन्त्येव यान्ति तां चित्रां संविदं पराम् ॥

---

१ संकोच्यान्तर्मुखीकृत्य विकास्य बहिर्मुखीकृत्य हृष्यति स्वात्मन्या-नन्दातिशयमनुभवति तथैवोभयस्य भैरवस्य भैरव्याश्च महानन्दं विसर्ग-भुवमित्यर्थः । एतदेव हि नामास्य परस्य प्रकाशस्यानन्यसाधारणं रूपं तत् सदैव सृष्टिसंहारकारित्वमिति अन्यथा हि अस्य जडेभ्यो वैलक्षण्यं न स्यादिति ।

२ उक्तं च

‘ एकीकृतमहामूलशूलवैसर्गिके हृदि ।
परस्मिन्नेति विश्रान्तिं सर्वापूरणयोगतः ॥
अथ तत्पूर्णवृत्त्यैव विश्वावेशमयं स्थितम् ।
प्रकाशस्यात्मविश्रान्तावहमित्येव दृश्यताम् ॥
अनुत्तरविमर्शे प्राग्व्यापारादिविवर्जिते ।
चिद्विमर्शः पराहंकृत् प्रथमोल्लासिनि स्फुरेत् ॥ ’

इति ।

---

पं० १० क० ग० पु० न्त्येष यन्ति इति पाठः ।

दशाद्रव्यक्रियास्थानज्ञानादिष्वपि सर्वशः ।
अशङ्कयैव संक्रामः पूजास्य सततोदिता ॥
क्रमपूजनमात्रं च कुलपर्वपवित्रकैः ।
सहात्र पूजने प्रोक्तं सम्यक्त्वं त्रिकशासने ॥'

यथोक्तम्

'द्रवाणामिव शारीरं वर्णानां सृष्टिबीजकम् ।
शासनानां त्रिकं शास्त्रं मोक्षाणां भैरवी स्थितिः ॥
उपासायाः समापत्तिर्व्रतानां वीरवृत्तिता ।
तथैव पर्वमध्ये तु कुलपर्वाणि शासने ॥
सर्वेषां चापि यागानां पूरणाय पवित्रकम् ।
पवित्रकं न कुर्वन्ति चतुस्त्रिद्विःसकृत्तु ये ॥
कुलपर्व न जानन्ति तेषां वीर्यं न रोहति ।'

---

फुरइ फुरणम अलह काअब्बह पर देउ सोहि
अउस मगाह सव्व काल नीसंकसङ्क सहजा
जाणु पूजस पज्ज इ इ उ उ ह ॥

---

एवमनुत्तरस्वरूपं विस्तरतो निर्णीतं—यत्र भावनाद्यनवकाशः, प्रसंख्यानमात्रमेव दृढचमत्कार-

---

१ वीर्यलक्षणम् ।

---

पं० ६ ख० पु० द्रव्याणामिवेति पाठः ।

लक्षणहृदयङ्गमतात्मकप्रतिपत्तिदार्ढ्यपर्यन्तं यत्रोपायधौरेयधाराधराणि धत्ते, सिद्धिप्रेप्सुषु तु योगो वक्तव्यः—स्वातन्त्र्यानीयमानास्वपि इष्टयोगसिद्धिषु लौकिकप्रसिद्धिनियत्युत्तरत्वेऽपि पारमेशव्यवस्थारूपनियत्यनतिक्रमात्, यदुक्तं शिवदृष्टौ

'तथापि चित्रकर्मार्थमुपायो वाच्य आदरात् ।'

इति, तत्रापि चानुत्तररूपस्य नास्ति खण्डना काचित्—इष्टसिद्धीप्सायत्नस्येव तदाप्तितत्फलविश्रान्त्यादेरपि परैकमयत्वात्, किन्तु जीवन्मुक्तापेक्षया मन्दशक्तिपातोऽसावुच्येत अपूर्णप्रायत्वात् ॥

तं योगमार्गं निरूपयितुं ग्रन्थशेषोऽवतरति

आद्यन्तरहितं बीजं
विकसत्तिथिमध्यगम् ।
हृत्पद्मान्तर्गतं ध्यायेत्-
सोमांशं नित्यमभ्यस्येत् ॥ ३३ ॥

एतदेव हृदयबीजं दीपकाभावात् गमागमशून्यत्वात् सततोदितत्वाच्च अनाद्यन्तं, तदेव विकसत् परिपूर्णत्वं यातं तिथीनां मध्यगं—हृदयत्वात्, तदेव संकोचविकासधर्मोपचरितपद्मभावे कन्दे गुह्ये हृदैव ध्यायेत्, किं च अस्य ध्यानमाह 'सोमांशं' षोडशकलात्मकं सोमरूपम् अभितः समन्तादस्येत् क्षिपेत्—परिपूर्णचन्द्रस्यास्य हृत्कर्णिकानिवेशिकलया स्वस्वद्वादशान्तगपुष्पाद्युदयस्थानात्, आहृतामृतस्पर्शैः प्रोद्यन्नादानुसारचुम्बिकालक्षणकाकचञ्चुपुटमुद्रामुद्रितः पुनस्तदपसृतशिशिरामृतरसास्वादविकस्वरहार्दसोमप्रसरन्नादनिर्मथितसुधापानपूरितचन्द्रमाः पुनः सूर्यकलोदयमयानच्कसकारमात्रविश्रान्तो रोमाञ्चस्तोभोत्पतनवाष्पकम्पस्तम्भाद्यनुगृहीतदेहोऽभ्यासं कुर्यादिति भट्टधनेश्वरशर्मा। आद्यन्तरहितं सकारमात्रं षोडशाकारादितिथिसहितं कलाग्रासक्रमेण हृदयेऽन्तर्निक्षिपेत् नालिकाजलाकर्षणवत् चलनक-

म्पनस्पन्दनसमाविष्टमूलाधारत्रिकोणभद्रकन्द-हृन्मुखमुद्रासु युगपदेव विलम्बितमध्यद्रुततर-तदतिशयादिधाराप्राप्तिवशगलितसूर्यसोमक-लाजालग्रासे आद्यन्तरहितं कृत्वा आद्यन्ताभ्या-मेतद्बीजमातृकापेक्षया औकारसकाराभ्यां रहितं विश्लेषणयुक्तिलब्धवीर्यपरिचयं ध्रुवं विसर्गा-त्मकं विकसतां पञ्चदशानां तिथीनां यन्मध्यं तिथिरहितमेव ग्रस्तकालं षोडशं ततोऽपि ग-च्छति यत् 'सप्तदशी कला' इत्युक्तम् सोमस्य षोडशात्मकम् आमृतमंशं हृत्कमले ध्यायेत् तदेव नित्यमभ्यस्येदित्यस्मद्गुरवः, तथाहि – स-होमया भगवत्या संघट्टात्मकसमापत्तिक्षोभेण तत्त्वनिर्मथनात्मना वर्तते इति सोमो भट्टारकः तस्य समग्रभावावयविनः परिपूर्णाहमात्मनोऽशो नीलसुखादिः तदेवमभ्यस्यति स्वस्वरूपावर्त-नसृष्टिसंहारावर्तचक्राक्षमालिकया पुनः पुनरा-वर्तयतीति यत् सत्यं भाव्यते स एव एष सततोदितो हृदयजपः, संभावनायां लिङ्।

अन्ये तु हृत्स्थानात् द्वादशान्तं यश्चारः षट्त्रिं-
शदङ्गुलः तत्र सूर्यरूपतयोल्लास्य बहिरर्धतुटि-
मात्रं विश्रम्य अविनाश्यमृताख्यविसर्गरूपसो-
मकलोदये सपादाङ्गुलद्वितयमात्रायां तुटौ तुटौ
प्रत्येकं चन्द्रकलापरिपूरणे पञ्चदश्यां तुटौ पू-
र्णायां हृत्पद्मे पूर्णश्च भवति अर्धतुटिमात्रं च
तत्रापि विश्रान्तिः, एवं षोडशतुट्यात्मा षट्त्रिंश-
दङ्गुलश्चारो भवति इत्यवस्थायामाद्यन्तरहितम्
अनस्तमितत्वात् विकसत्सु द्वितीयादिषु अन्त-
र्गतं सोमांशं विसर्गरूपं हृत्पद्ममध्ये विश्लिष्य
सप्तदशात्मकं परिशीलनेन ध्यायन् कलाग्रासा-
भ्यासं कुर्यात् इत्यादि समादिशन्, सर्वं चैतत्
युक्तमेव मन्तव्यम् । अत्र चावृत्त्यानन्तं व्या-
ख्यानं सूत्रत्वादुपपन्नमेव यत उक्तम् 'अनन्ता-
र्थसूत्रणात्सूत्रम्' इति 'त्रिंशिका चानुत्तरसू-
त्रम्' इति गुरवः । एवं पूर्वेष्वपि श्लोकसूत्रेषु
॥ ३३ ॥

किम् इत्थमभ्यासे सति भवति? इत्याह :

यान्यान्कामयते कामां-
स्तांस्ताञ्छीघ्रमवाप्नुयात् ।
अस्मात्प्रत्यक्षतामेति
सर्वज्ञत्वं न संशयः ॥ ३४ ॥

एवमभ्यासात् यद्यत्कामयते तत्तदचिरादेव तथाविधसर्वमयहृदयवीर्यसमुच्छलितेच्छाप्रसरावष्टम्भविशेषबलोद्योगसंरम्भसोत्साहः पुनः पुनः तत्स्थितिरूढिरूपाभ्यासात् प्राप्नोति, किं बहुना सर्वज्ञत्वं—परभैरवात्मकत्वमनेनैव देहेन, इति सर्वमुक्त्वोपसंह्रियते, पर्यन्ते हि प्रसरस्योपसंहारे विश्रान्तिरूपाकुलसत्तासादने भैरवता—इत्युक्तमसकृत् ॥ ३४ ॥

सोऽयमुपसंहारग्रन्थः

एवं मन्त्रफलावाप्ति-
रित्येतद्रुद्रयामलम् ।

एतदभ्यासतः सिद्धिः
सर्वज्ञत्वमवाप्यते ॥ ३५ ॥

मन्त्राणां शास्त्रान्तरीयाणां वर्णानां च फलमेवमवाप्यते नान्यथेति समाप्तौ रुद्रस्य रुद्रायाश्च यद्यामलं — संघट्टः निर्विभागप्रश्नोत्तररूपस्वरूपामर्शनप्रसरात् आरभ्य यावद्बहिरनन्तापरिगणनीयसृष्टिसंहारशतभासनं यत्रान्तः, तदेतदकुलोपसंहृतमेव — इति प्रसंख्याननिगमनम्। 'एतदभ्यासात्सर्वज्ञत्वम्' इति योगफलनिगमनम्। सततोदितं हि एतत्सर्वस्य इति शिवम् ॥

---

इत्थं प्रपन्नजनतोद्धरणप्रवृत्त-
श्रीमन्महेश्वरपदाम्बुजचञ्चुरीकः ।
वृत्तिं व्यधात्त्रिकरहस्यविमर्शगर्भां
काश्मीरिकाच्चुखलकादधिगम्य जन्म ॥ १ ॥
एतावदेतदिति कस्तुलयेत्प्रसह्य
श्रीशांभवं मतमनर्गलिताश्च वाचः ।

पं॰ ८ क॰ पु॰ संहृतिमेतीति, ख॰ पु॰ संहृतमेतीति पाठः ।

एतत्तु तावदखिलात्मनि भाति यन्मे
भातं ततोऽत्र सुधियो न पराङ्मुखाः स्युः ॥ २ ॥
अज्ञस्य संशयविपर्ययभागिनो वा
ज्ञानं प्रकम्परहितं प्रकरोति सम्यक् ।
रूढस्य निश्चयवतो हृदयप्रतिष्ठां
संवादिनीं प्रकुरुते कृतिरीदृशीयम् ॥ ३ ॥
एतावदर्थरससंकलनाधिरूढ-
धाराधिरूढहृदयो विमृशेदतोऽपि ।
यद्युत्तरं तदपि नैव सहेत नेदं
सोपानमेतदमलं पदमारुरुक्षोः ॥ ४ ॥
कश्मीरेषु यशस्करस्य नृपतेरासीदमात्याग्रणीः
श्रीमान्वल्लभ इत्युदाहृततनुर्यः प्राग्र्यजन्मा द्विजः ।
तस्य स्वाङ्गभवः प्रसिद्धिपदवीपात्रं समग्रैर्गुणैः
श्रीशौरिः शिशुचन्द्रचूडचरणध्यानैकरत्नाकरः ॥ ५ ॥
शीलस्यायतनं परस्य यशसो जृम्भास्पदं नर्मभू-
र्वात्सल्यस्य समग्रलोककरुणाधर्मस्य जन्मस्थितिः ।
श्रीमद्वत्सलिकाभिधा सहचरी तस्यैव भक्त्युल्लसत्-
प्रोद्रिक्तान्तरवृत्ति शंकरनुतौ यस्या मनो जृम्भते ॥ ६ ॥
तस्यैवात्मभवो विभावितजगत्सर्गस्थितिः शंकर-
ध्यानार्चापरिचिन्तनैकरसिकः कर्णाभिधानो द्विजः ।

यो बाल्येऽप्यथ यौवनेऽपि विषयासक्तिं विहाय स्थिरा-
मेनामाश्रयते विमर्शपदवीं संसारनिर्मूलिनीम् ॥ ७ ॥

भ्राता ममैव शिवशासनरूढचित्तः
प्रेप्सुः परात्मनि मनोरथगुप्तनामा ।
यः शास्त्रतन्त्रमखिलं प्रविवेक्तुकामः
प्राप्तुं परं शिवपदं भवभेदनाय ॥ ८ ॥

शिवशास्त्रैकरसिकः पदवाक्यप्रमाणवित्[1] ।
रामदेवाभिधानश्च भूषितोत्तमजन्मकः ॥ ९ ॥

एतत्प्रियहितकरण-
प्ररूढहृदयेन यन्मया रचितम् ।
मार्गप्रदर्शनं तत्
सर्वस्य शिवाप्तये भूयात् ॥ १० ॥

अन्तर्वेद्यामत्रिगुप्ताभिधानः
प्राप्योत्पत्तिं प्राविशत्प्राग्र्यजन्मा ।
श्रीकाश्मीरांश्चन्द्रचूडावतारै-
र्निःसंख्याकैः पावितोपान्तभागान् ॥ ११ ॥

तस्यान्ववाये महति प्रसूता-
द्वराहगुप्तात्प्रतिलब्धजन्मा ।
संसारवृत्तान्तपराङ्मुखो यः
शिवैकचित्तश्चुखलाभिधानः ॥ १२ ॥

---

१. पदमिति व्याकरणम् । वाक्यं मीमांसा । प्रमाणं तर्कः ।

तस्माद्विवेचितसमस्तपदार्थजाता-
ल्लब्ध्वापि देहपदवीं परमेशपूताम् ।
प्राप्ताभयोऽभिनवगुप्तपदाभिधानः
प्रावेशयत्रिकसतत्त्वमिदं निगूढम् ॥ १३ ॥

ये तावत्प्रविवेकवन्ध्यहृदयास्तेभ्यः प्रणामो वरः
केऽप्यन्ये प्रविविश्चते न च गताः पारं धिगेताञ्जडान् ।
यस्त्वन्यः प्रविमर्शसारपदवीसंभावनासुस्थितो
लक्षैकोऽपि स कश्चिदेव सफलीकुर्वीत यत्नं मम ॥ १४ ॥

स्वात्मानं प्रविवेक्तुमप्यलसतां ये बिभ्रति प्रार्थना
तान्प्रत्यात्मकदर्थनान्न परतः किंचित्फलं सोष्यते ।
विश्वस्यास्य विविक्तये स्थिरधियो ये संरभन्ते पुनः
तानभ्यर्थयितुं मयैष विहितो मूर्ध्ना प्रणामादरः ॥ १५ ॥

भ्राम्यन्तो भ्रमयन्ति मन्दधिषणास्ते जन्तुचक्रं जडं
स्वात्मीकृत्य गुणाभिधानवशतो बद्ध्वा दृढं बन्धनैः ।
दृष्ट्वेत्थं गुरुभारवाहविधये यातानुयातान्पशून्
तत्पाशप्रविकर्तनाय घटितं ज्ञानत्रिशूलं मया ॥ १६ ॥

बहुभिरपि सोऽहमेव
भ्रमितस्तत्त्वोपदेशकंमन्यैः ।
तत्त्वमिति वर्णयुगमपि
येषां रसना न पस्पर्श ॥ १७ ॥

परमेश्वरः प्रपन्न-
प्रोद्धरणकृपाप्रयुक्तगुरुहृदयः ।

श्रीमान्देवः शंभु-
र्मामियंति नियुक्तवांस्तत्त्वे ॥ १८ ॥
तत्तत्त्वनिर्मलस्थिति-
विभागिहृदये स्वयं प्रविष्टमिव ।
श्रीसोमानन्दमतं
विमृश्य मया निबद्धमिदम् ॥ १९ ॥

हंहो हृच्चक्रचारप्रविरचनलसन्निर्भरानन्दपूर्णा
देव्योऽस्मत्पाशकोटिप्रविघटनपटुज्ञानशूलोर्ध्वधाराः ।
चेतोवाक्कायमेतद्विगतभवभयोत्पत्ति युष्मासु सम्यक्
प्रोतं यत्तेन मह्यं व्रजत किल हृदि द्राक्प्रसादं प्रसह्य ॥२०॥

व्याख्यादिकर्मपरिपाटिपदे नियुक्तो
युष्माभिरस्मि गुरुभावमनुप्रविश्य ।
वाक्चित्तचापलमिदं मम तेन देव्य-
स्तच्चक्रचारुचतुरस्थितयः क्षमध्वम् ॥ २१ ॥

---

समाप्तमिदं परात्रिंशिकातत्त्वविवरणम् ॥

---

शतैरेकोनविंशत्या त्रिंशिकेयं विवेचिता ।
सर्वेषु त्रिकशास्त्रेषु ग्रन्थीर्निर्दलयिष्यति ॥

---

इति श्रीपरात्रिंशिका समाप्ता

---

विवृतिश्चात्र

तत्र भवत्-श्रीमन्महामाहेश्वराचार्यवर्य-श्रीमदभिनव-
गुप्ताचार्यविरचिता

---

सद्विद्यानां संश्रये ग्रन्थविद्वद्-
व्यूहे ह्रासं कालवृत्त्योपयाते ।
तत्तत्सद्धर्मोद्दिधीर्षैकतान-
सत्प्रेक्षौजःशालिना कर्मवृत्त्यै ॥ १ ॥

श्रीमत्कश्मीराधिराजेन मुख्यै-
र्धर्मोद्युक्तैर्मन्त्रिभिः स्वैर्विवेच्य ।
प्रत्यष्ठापि ज्ञानविज्ञानगर्भ-
ग्रन्थोद्धृत्यै मुख्यकार्यालयो यः ॥ २ ॥

तत्राजीवं निर्विशद्भिर्मुकुन्द-
रामाध्यक्षत्वाश्रितैः सद्भिरेषः ।
पूर्त्या शुद्ध्या व्याख्यया संस्कृतः स्तात्
पूर्णो ग्रन्थः श्रेयसे सज्जनानाम् ॥ ३ ॥

(तिलकम्)

---

श्रीमत्स्वात्मशिवार्पणं बोभवीतु ।

---